सरस्वती श्रुतिमहती महीयताम्

# सरस्वतीसम्मेलनस्य

प्रथमो



# वार्षिको वृत्तान्तः

श्रीगुरुकुलमुख्याधिष्ठातुराज्ञया प्रकाशितः

पं० अनन्तरामशर्म्मणः प्रबन्धेन

कांगड़ी गुरुकुलीये सद्धर्म्मप्रचारक-यन्त्रालये

मुद्रितः

प्रथमावृत्तौ १००० | सं० १९६४ वि० | मूल्यम् =)

* ओ३म् *

# * विषयसूचिः *



—:०:—

ओ३म्

# मुखबन्ध

चिरस्य खलु कालस्य, अभिप्रेतोऽभूद् गुरुकुलमुख्याधिष्ठातुः कश्चित्प्राच्यसाहित्यविदुषां विवेचनार्थकः समागमः। कारणविशेषैः आगामिन, आगामिने वर्षाय विलम्बमानोऽसावन्ततोऽस्मिन् संवत्सरे गुरुकुलवार्षिकोत्सवावसर एव सङ्घटनसुलभतरं गुरुकुलब्रह्मचारिणां हितकरञ्च मन्यमानस्तदनुष्ठातुम्बद्धसमुत्साहोऽभवत्। तदनुसारमेव प्राहिणोच्चैतन्निमन्त्रणपत्रम् भारतीयेभ्योऽन्येभ्यश्च पण्डितेभ्यः—

## सरस्वतीसम्मेलनम्

"सरस्वती श्रुतिमहती महीयताम्"

श्रीमन्महोदय !

विदितमेवात्रभवतां यद्वैदेशिकास्सन्तोपि पाश्चात्याः पण्डिताः कियन्तमायासमङ्गीकृत्यास्माकं प्राचीनं साहित्यमधीयते। अधीत्य च तद्विषयकमन्वेषणं विदधति। एतस्मै प्रयोजनाय विविधाः संस्थाः संस्थापयन्ति, लुप्तप्रायांश्च संस्कृतग्रन्थान् प्रकाशयन्ति, एवं च हृद्युद्दीप्यमानं सान्द्रम्प्राचीनसाहित्यप्रेमाणम्प्रकटयन्ति। अस्माकमत्रत्याः पण्डितास्तु संस्कृतसाहित्यमधीत्यापि, तत्र परमं पुण्यमुपलभ्यापि न तस्मिन् कल्याणकरे कर्मणि नेत्रपातमपि कुर्वन्ति। लज्जाकरमिदं तेषामौदासीन्यम्। एतदेवाकलय्य चिरादभिलष्यमाणमप्यन्तरायबाहुल्यात् कार्यरूपेणापरिणतं सम्मेलनमद्य समयानुकूल्यात् कर्तुमुपक्रान्तम्। तच्च पुरातनां शिक्षाप्रणालीमुद्धर्तुं स्थापितस्य गुरुकुलस्य वार्षिकोत्सवावसरे भविष्यति। ( फाल्गुनस्य कृष्णपक्षे दशम्यामेकादश्यां द्वादश्याञ्च मार्च १२, १३, १४ तारीख ) भूयांसो निमन्त्रितास्संस्कृतविद्वांसस्समागत्य परिषदमिमां सनाथीकरिष्यन्ति, तद्भवद्भिरपि समेत्य भूष्यतामियमिति।

साशमभ्यर्थयामि,

मुख्याधिष्ठाता

# सम्मेलनस्य समयविभागः ।

## दशमी ( १२ मार्च )

प्रातः काले ।

वादनात् पर्य्यन्तम् ।

| | | |
|---|---|---|
| ७॥ | ८ | गुरुकुलमुख्याधिष्ठातुस्सम्मेलनप्रयोजनवर्णनपरा वक्तृता, सभापतेर्निर्वाचनञ्च । |
| ८ | ८। | सभापतेरारम्भिका वक्तृता । |
| ८। | ९ | श्रीयुत शिवशङ्करकाव्यतीर्थः "दर्शनानां मिथो विरोधो वर्तते न वे" तिविषयमधिकृत्य निबन्धं पठिष्यति । |
| ९ | १०॥ | निबन्धमभिलक्ष्य विवादः । |
| १०॥ | १०॥। | निबन्धकर्तुरुत्तरम् । |
| १०॥। | ११ | सभापतेर्वक्तृता |

## एकादशी ( १३ मार्च )

प्रातः काले ।

| | | |
|---|---|---|
| ७। | ८। | श्री० अखिलानन्दशर्मा संस्कृतस्य वर्तमानदशामधिकृत्य निबन्धम्पठिष्यति । |
| ८। | ९॥। | निबन्धमभिलक्ष्य विवादः । |
| ९॥। | १० | निबन्धकर्तुरुत्तरम् । |
| १० | १०॥ | सभापतेर्वक्तृता । |

सायंकाले ,

२ वादनात् ४ पर्यन्तम् ।

कयारीत्येदं सम्मेलनम्नियमबद्धं स्थिरञ्च कर्तव्यमिति विषये विचारो भविष्यति ।

## द्वादशी ( १४ मार्च )

प्रातः काले ।

| | | |
|---|---|---|
| ७॥ | ८। | श्री० इन्द्रो ब्रह्मचारी "किं दर्शनानि धर्मशास्त्रस्थानं लब्धुमर्हन्ति न वे" ति विषयमधिकृत्य निबन्धम्पठिष्यति । |
| ८। | ९। | निबन्धमभिलक्ष्य विवादः । |
| ९। | १० | निबन्धकर्तुरुत्तरम् । |
| १० | १०॥ | सभापतेर्वक्तृता । |

टि० सभार्थं निमन्त्रितानां विदुषां भोजनप्रबन्धं गुरुकुलाधिकारिणः करिष्यन्ति ।

तदनुसारमेव निमन्त्रणपत्र निर्दिष्टायान्तिथौ सम्मेलनप्रारम्भोऽभूत्। यद्यप्याद्यदिने पं० शिवशङ्करकाव्यतीर्थेन निबन्धः श्रावणीयोऽभवत्तथापि काव्यतीर्थमहोदयशरीरस्यास्वस्थत्वात्कविरखिलानन्द एव स्वीयं साहित्य-विषयकन्निबन्धमपठत् ।

## सरस्वतीसम्मेलनेतिवृत्तम्

### फाल्गुनशुक्लपक्षे—दशमी

यथासमयमुपस्थितेषु पण्डितवरेषु श्रीमान् गुरुकुलमुख्याधिष्ठाता प्रास्ताविकीं वक्तृतामेतां ( आर्यभाषया ) वितताार ।

### ( मुख्याधिष्ठातुः प्रास्ताविकी वक्तृता )

" अयि श्रीमन्तः पण्डितमहोदयाः ! साधारणजनवृत्तौ यद्यप्यद्यतनन्दिनं सामान्यतान्नातिवर्त्तते, तथापि यद्यद्य प्रस्तुतङ्कार्य्यञ्जिज्ञासया शुभभावेन साधुतया चारभ्येत, तदा निःसंशयमेतदेव दिनङ्कदाचित्पुण्यतामीयादिति सम्भावयामि । सर्वेभ्योऽपि भवद्भ्यो मत्प्रत्ताः धन्यवादाः सन्तु, यैर्युष्माभिः कष्टमिदमनुभूय शोभावहाऽङ्कृतमिदमरण्यं सम्मेलनञ्च । इदं गुरुकुलं श्रीदयानन्दशिक्षानुसारं यदा स्थापितमभूत्, तदा मुख्यत एतस्य वेदार्थप्रसारोपायतैवाभीष्टाऽभूत् । वेदेषु या लोकसम्मोहिनी शक्तिरस्ति, तस्यां शार्मण्यो वीज़ ( Wiese ) महोदयो दृष्टान्ततया समुपात्तुं शक्यते । एतेन विदुषा यत्पत्रं स्वामिदयानन्दाय लिखितन्तन्मया वैदिकमेगज़ीने मुद्राप्यते। तत्र हि तेन "वेदा एव शान्तिमाधातुमर्हाः" इति स्फुटमावेदितम् । एतादृशाङ्गुणगिरमयुतानां वेदानां सर्वाधिकः प्रचारक आर्य्यसमाज एव । वेदप्रचारायैव चार्य्यसमाजिकैर्गुरुकुलमिदं स्थापितमस्ति । अतो वेदविचाराय सम्मेलनानि गुरुकुलेऽपि यदि न स्युस्तर्हि कुत्र भवेयुः ।

"अस्मदीयदौर्भाग्यादस्मत्कार्य्याणि विघ्नबहुलानि भवन्ति । तेषां विघ्नानाम्प्रतिरोधाय वेदात्मकं शस्त्रङ्करे कृत्वैवास्माभिरग्रेसरैर्भाव्यम् । वेदविषयाणां विवेचनाय, वैदिकार्थनिर्णयाय चात एवास्माभिरीदृश्येका समितिरिष्यते, या ज्यात्मिकानां वैदिकानामन्येषाञ्च तदनुबन्धिसंशयपदानामनिष्पक्षपाततया, निरीर्ष्यतया च आन्दोलनङ्कुर्य्यात्, सत्यञ्चोद्भावयितुं प्रयतेत।

एतेन च सम्भावितशुभोदर्केण कार्य्येण तर्कयामि गुरुकुलब्रह्मचारिणामपि महानेव लाभः कृतः स्यात्। सम्भाव्यते च इयमेव समितिः कदापि गवेषणसमितिरूपम्प्राप्य महत्त्वम्प्रतिपद्येत। तत्राद्यं कार्य्यं सभापतिनिर्वाचनमेव। तदुत्तरञ्चादौ निबन्धपाठः, तदुत्तरन्तद्विषये वक्तृता, सर्वान्ते च निबन्धाध्येतुरुत्तरपक्षइत्येव प्रतिदिनङ्कार्य्यक्रमः। अन्ते च सभापतिरुपसंहरिष्यति विवादम्। तत्राहमाशासे समितिक्रमं तन्नियमांश्च मनसि निधाय भवन्तः सम्प्रति समितिकर्मणि प्रवर्तिष्यन्ते।"

## ( सभापतेर्निर्वाचनम् )

तत्रादौ पं० शिवशङ्करकाव्यतीर्थः श्रीमन्तम्पण्डितकाशीनाथशास्त्रिणं सभापतित्वेनप्रास्तावीत्। सोऽकथयद्यत्रात्र संसदि कोऽपि पण्डितोऽमुष्य विद्वत्पतेरतिशयनङ्गुणगणैः कर्त्तुमर्हः। शिष्या विनेयाश्चैते वयं सर्वेऽपि श्रीमतः, अतः प्रार्थयाम्यहमेव समितिं, यदसौ तत्रभवन्तं सभापतित्वेन वृणुयात्।

पं० अखिलानन्दशर्मा चैतदन्वमोदत।

सर्वसम्मत्या च प्रस्तावः परिपोषितोऽभवत्। ततश्च श्रीमान् गुरुकुलमुख्याधिष्ठाता श्रीमन्तङ्काशीनाथशास्त्रिणमासनमध्यास्तुम्प्रार्थयत्। सभापतिश्चासनमलङ्कुर्वन् स्नातिवासिनं ब्रह्मचारिणमिन्द्रं स्ववक्तृतापठनाय आज्ञापयत्।

## ( सभापतेर्वक्तृता )

"भोः पारिषद्याः, विदितमेवात्रभवतां, यत्किलाद्य सम्प्राप्त एव सरस्वतीसम्मेलनस्य शुभवासरो नाम।

"यत्र महाशयैर्भवद्भिरहमयोग्योऽपि सभापतित्वेन नियुक्तोऽस्मि, एतादृशं सम्मानं भवद्भ्यः प्राप्नुवन् कोटिधन्यवादपुरस्सरं तत्रभवत आवेदयामि यत्—सम्मेलनस्य शुभमुद्देश्यं श्रीमान् गुरुकुलमुख्याधिष्ठातृवर्यः निजवक्तृतायां यदुक्तवान्—तदतीव साधु प्रतिभाति मे। साम्प्रतमस्ति समयो वक्तुम्; तदनुसरन् महाशयो वक्ताऽखिलानन्दः कविः प्रारभतां कथामिति।"

तदनु च पं० अखिलानन्दशर्मा संस्कृतसाहित्यस्य वर्त्तमानामवस्थितिमुद्दिश्य निबन्धमेतमश्रावयत्:—

* अथ *

# संस्कृतसाहित्यस्य वर्तमानदशा

## मुद्दिश्य,

## किमपि किञ्चित्प्रस्तूयते ।

भो भो बहुकालवियुक्तसरस्वतीसम्मेलनरसिकाः, सहृदयहृदयहृद्यहार्दिकधन्यवादप्रयोगयोग्यचरिताः, प्रमुदितभारतभूमिभव्यभूषणविभूषितभावुकविभावनीयभाग्यवद्भाविभासितकमलकल्किकाकोमलचरणकमलाः, समस्तकरकमलपल्लवपल्लजप्रतिपल्लवाणिपल्लवप्रतिवन्दनीयलोकोत्तरचमत्कारकारिकल्पनाकल्पितकल्पांतकलनाऽऽकलनीयकान्तिकमनीयकीर्तिकलाललामलालितललितलावण्यलास्यलीलालम्बनविलम्बनालम्बाः, किमियं न नेत्रपात्रीक्रियते संस्कृतसाहित्यस्य वर्तमानदशा प्रतिदिनमधोऽधो यान्ती, येयं पुराणपक्षानुगमानसैर्धृताभवदेकावलम्बिनामवलोकयन्ती, नानामतकर्दमपरिप्लुतमकलमृणालनालतर्जितकोमलांगी, परिशुद्धे भवादृशां मानसे इव मानसे पुनरपिमान-सेवावसरं पंकादुद्धरणसमयं च मुहुर्मुहुर्मीमांसयन्ती, कदा विशुष्कपत्रापगमादनंतरं प्रतानिनीवोद्गतरम्यपल्लवाऽहं भविष्यामीति संभावयन्ती, बहोःकालाद्विस्मृतनिमेषं, भव्यार्य्यजनसमुद्भवं गुरुकुलोद्भवं समीक्षमाणा, परित्रस्तनयनयुगला, धानुष्कभयभीता हरिणीव, मृगराजदलितकुंभयुगला करिणीव, साक्रंदमाक्रंदयन्ती प्राणेश्वरं, मतमदमाद्यन्मनुजमनोऽमनोज्ञं मनागनुगता, करालकलिकालकवलितकाव्यकल्पनाऽनुगमोहम्मदीशाक्तीयपौराणिकजैनबौद्धप्रभृतिभिरितस्ततः समाहृता, दीर्घमुष्णं च निःश्वसन्ती कथमप्यास्ते ।

१ मानपूर्वकसेवावसरम् ।

भारतभूमेरस्याः, मायोगतर्षितया, विलसितैरस्मादृशहतभाग्यजनाना-मुदयेन चाऽदृष्टदौर्भाग्यसूचितविधिवैधुर्य्याणां निरस्तालंबनाम्, अतिलंबायमान-दीर्घप्रयाणभयामेरितस्ततोऽपि शैथिल्येन दृष्टिमुत्क्षिपन्तीम्, "आदरणीयाहं भवद्भिर-नार्यजनैरनादृते"ति महिमानं, गरिमाणं, गुणवत्तां चास्य सकलदेशमूर्धन्यस्य, धन्यस्य, मान्यचरितस्य, महर्षिभरितस्य देशस्य कथयन्तीम्, अनाथां या-मधिगम्य जार्मनीयजापानीयप्रभृतयो वैदेशिकाः सर्वेऽपि पाश्चात्याः कथम-स्मिन्विषये सनाथतामुपेत्य दैशिका इव विभिन्नदेशवर्त्तिनोऽपि, सकलकार्यपाटवमपट-वोऽपि दर्शयन्तो, महतोऽमहतः कार्यौघाननायासेनैवेयं संस्कृतसाहित्यसरणि स्तर-णिप्रभेव निरस्तसमस्ततिमिरप्रत्यूहा साधयतीति हृदये समाकलयन्तोऽस्याः प्रभा-वेणैव, वायु-वायुयान-वायुयानधुरन्धरास्त्रान्याग्नेय—वारुणीय वायवीय—यानानि सं-पाद्य सम्पाद्य समासादिताऽस्माभिरस्मिन्विषये परभागमुपेयुषी कलाऽवशिष्टा सत्वरमुत्तरतया समासादयिष्यत इति संभावयन्तो वाद्याप्यस्याः संस्कृतसाहित्य-सरस-तरल-सरल-विरल पद्धते-रनौद्धत्येन सत्रा सत्रातमपि, समन्वेषणभयासं शि-थिलयंतीति दृश्यत एवैतत्प्रत्यक्षम् ।

निबंधनीया नवीननिबंधरूपेण नितरां नव्यैः सामाजिकमार्गमभ्युपेत्य दत्त-मनोधनशरीरैरनार्य्यतिरस्कृतसाहित्यदशादर्शनेन, लोकस्य चराचरस्य या वैपरीत्य-मनल्पमाप्नेति स्वयमेव निजदशां प्रख्यापयंती, या यामिनीविश्रांतपांथवत्पुनरुत्त-मजनानभ्युपेत्य विरलविशीर्णबंधना मालतीकलिकेव समुदयस्थलमेतन्ममेति मत्वा-ऽवधीरणभीरुत्वान्मंदं मंदं सकललोकमूर्धन्य-धन्यमान्यवर गुरुकुलमुख्याधिष्ठातृस-काश एव प्रथममात्मनिवेदयदारंभे प्रेमाणम् ।

नार्यसामाजिकजनाद् ऋते समुद्धरिष्यति कोऽपि मामिति हृदये समाकल-य्य या, सर्वतः पूर्वं केवलतदेकदत्तचित्तं वर्त्तमानकविरत्नमेव सादरमुररीचकार ।

कथं नाम तादृशं जनं विद्वन्मानसहंसाधिरूढा भगवती भारती नांगीकुर्य्यात्, यो बाल्य एव निरस्तसर्वविषयम्,अत एव निर्विषयं मनः स्वकं केवले तदाराधन एव योजयांबभूव ।

समासोऽप्यार्यवर्णानाम्, कुले यां परिहृतसर्वस्व इव, निरस्तसौख्य इव, वंचितजीवन इव किमपि हृदयेऽवधारयन् विशुष्कवदनोऽद्यापि तामेवार्यसरस्वतीसंमेलनसभां,या प्रतिपुरं पुराभारते भारत–भारतीभूषणैर्भव्यार्यमानवकदंबैः सादरमाहृतासीत्, पुनरधिवेशयामास ।

कथं नाम नाधिवेशयेत्, यस्याः प्रभावेण जाबालिगौतमपराशरदाक्षिमनुव्यासात्रि-जैमिनिकणादमरीचिमुख्याः कात्यायनादिपरमर्षिमुनीश्वरौघा निखिलवेदांगोपांगदर्शनादिप्रदर्शयितारः प्राचीनेषु गुरुकुलेषु सर्वत्रापि शरीरमनोधनजातं सादरमादरणीये देशोपकारे च निरस्तनिजप्रयोजनं प्रकर्षेणोपायनीचक्रुः ।

सहृदयहृदयहृदयालवालललनीयललितलावण्यसिंधुसमुत्थलसन्मुक्ताफलकमनीयतरलतरतारहारहारिचमत्कृतयष्टिः, सरससरलतरलविरलध्वनि वर्णपदवाक्यसारस्पदचतुष्टयवती वैखरी—मध्यमा—पश्यंती—सूक्ष्मादिनाना स्फोटवैपुल्यभावभावितांतःकरणा सा भगवती भारती, भारतभा—परिस्फुरित चरणकमलतलान्, भूषणायित-स्वभावमुग्ध-मधुरधुर-पदविन्यासान् मुनीनपश्यंती भारते, दौर्भाग्यादेतस्य निसर्गदग्धविरहविधुरधुगीणधूर्तहधूलिधूमराधर्मधूमायितहृदयान् खलान् कथमापेति विषये तु कारणोपचयं पश्चान्मीमांसयितुं प्रयत्नं प्रयोजनापेक्षतया विधास्यामः ।

सांप्रतं प्रसंगतस्तावत् तदुत्पत्तिनिदानादिविषये मुग्धामुग्धजनविप्रतिपत्तिनिरासाय कश्चिद्वाक्यकदंबो दंभोलिरिव तद्विरुद्धपक्षावलंबिजननिराकृतये प्रस्तूयते । स यथाः–

"वृत्तालंकारसमुद्भूतसंस्कृतसाहित्यविपर्यये । वेदविरुद्धकल्पनारते किं मानम्?" इति मया सर्वेपि पौराणिकपक्षमुद्दिश्य कृतप्रश्ने वैषयिकवेदविरुद्धकाव्यकल्पनाः श्रीहर्ष-भारवि–माघ–बाणभट्ट–सुबन्धु–कालिदास–भवभूति -त्रिविक्रमभट्टानंतभट्ट भानुदत्त-विश्वनाथ-मम्मटाद्याः प्रतर्क्यन्ते ।

"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" "तद्वचनादाम्नायस्य प्रामाण्यम्" इति काणादसूत्रयोः सांगस्ये धर्मप्रतिपादनमेव वेदानां विषय इति केन बालवृद्धोन्मत्तधूर्त्तनास्तिकेतरधिया सहर्षं सादरञ्च नांगीक्रियते।

तत्रभवतो भगवतो वेदस्य धर्मपरत्वे वृत्तालंकारादिवेदांगानां निसर्गसिद्ध एव वेदप्रतिपाद्य एको धर्मविषयः; परिदृश्यते च लोके यमर्थमधिकृत्य अंगी प्रवर्त्तते, तत्रैव तदनुगामिनामङ्गानां प्रवृत्तिरिति।

चारितार्थ्यमाप्तेऽस्मिँल्लोकसिद्धे न्यायविषये कथं वेदांगभूतवृत्तालंकारजन्यसंस्कृतसाहित्यस्य वेदविरुद्धकल्पनापरत्वमिति विचार्य एषः सर्वैरपि वेदानुयायिभिरलं पंथाः।

काठिन्येन वेदद्वारा सिद्धे धर्मप्रतिपादने, स्वारस्येन सारस्येन च तत्प्रतिपादनं वेदांगरूपवृत्तालंकारसमुत्थकाव्यानां विषयः, तद्द्वारैव अल्पधियामपि चतुर्वर्गफलप्राप्तिरिस्यत एव धर्मार्थकाममोक्षेषु सकललौकिककाम्यकलासु च साधुकाव्यनिषेवणं वैचक्षण्यं प्रतिपादयतीति सहृदयहृदयमूर्धन्यस्य कवेः विश्वनाथस्य मतम्।

वेदमार्गमनादृत्य, यथेच्छमार्गेण विचरतां, विधिनिषेधपरित्यक्तसकलसमदृष्टीनां, पुराणपरिशीलनविनष्टमकरन्दमदबुद्धीनां, शैवशाक्तरामानुजवैष्णवराधावल्लभजैनबौद्धमौहम्मदादिनानापक्षावलंबिनां नये, भवतु नाम पाषाणपूजनजलस्नानप्रसादरूपमद्यमांसनिषेवण-तुलसी-रुद्राक्ष-माला-तिलक-शंखचक्रगदापद्मसंधारणादिह वा, अमुत्र वा, चतुर्वर्गफलप्राप्तिः।

परं, वैदिकानामार्य्यार्षसिद्धांतानुगामिनां धार्मिकाणां नये तु, न वेदानुकूलकृत्यमंतरा कदापि चतुर्वर्गफलप्राप्तिरतो बहुसरलतया तत्प्रतिपादनाय संस्कृतसाहित्यविषयस्य प्रवृत्तिरिति सर्वैरप्यार्यैरनुमोद्यते।

वेदप्रतिपाद्यधर्म एव यदि काव्यानामपि विषयः, तर्हि परिणतबुद्धिभिः सत्सु वेदादिसत्यशास्त्रेषु काव्यादौ किमिति यत्नः करणीयः ? इत्यपि न वक्तुंशक्यते,

कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्करामवृत्तिः साधीयसी न स्यादिति नयात् ।

अमुमेवार्थमाकलय्य विनेयसुकुमारमत्युपयोगि, सरलतया वैदिकशिक्षाप्रवर्तकं गुणालंकारयुक्तमेकं काव्यमेव 'यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये सद्यःपरनिर्वृतये कांतासंमिततयोपदेशयुजे' च मुनिर्भरतोप्यममंस्त ।

अदृष्टविषयानन्दा अपि परमदार्शनिकाः, निरस्तापरप्रयोजना अपि समस्तपरप्रयोजनाः, निर्गतोक्तिमद्विषया अपि सर्वथा निरुक्तकाराः, निर्गतालंकारा अपि काव्यालंकारप्रणेतारः, निरस्तच्छन्दयोपि सर्वथा छांदसिकाः, निर्गतविकृतयोऽपि व्याकृतिदक्षाः, अपठितशिक्षा अपि प्रकाशितशिक्षाविषयाः, परित्यक्तकल्पना अपि कल्पप्रभवाः, नियोगमकुर्वाणा अपि योगनिपुणाः, अनालोचितन्यायमाला अपि न्यायमार्गसंपादकाः, धर्मे तर्कमस्वीकुर्वतोपि धर्माय तर्कप्रणेतारः, कार्यविशेषमतिवाहयंतोपि वैशेषिकविधानमादधानाः, प्रत्यक्षफलत्वान्निरस्तमीमांसना अपि मीमांसापटवः, संख्यातीतप्रकृतिगुणाः अपि सांख्ये वर्णितप्रकृतिगुणाः, स्वभावदांता अपि वेदांतदर्शनपराः, निसर्गशांता अपि शान्तरसतत्पराः, प्राचीना ऋषयो मुनयो नयज्ञा महर्षयश्च पुरस्ताद्विरोधालंकारदर्शितकला, संस्कृतसाहित्यसरणिं कीदृग्विधां कथमवर्णनीयपरिश्रमेण संपादयांबभूवुरिति समालोचयंतोपि निरस्तालोचनाः, सर्वथास्मिन्विषये नैपुण्यमधिगतं प्राचीनसाहित्यदर्शनात्पलांडुगतरूपमिव, श्वपचकुमारिकालावण्यमिव व्यर्थमेव संरक्षयन्तः, वास्तवे शोचनीयतामाधुनिकाः कवयो मादृशहतभाग्यजनदौर्भाग्येन प्रयान्ती सहह निसर्गनियतं नियतिनैयत्यम् !

जनिमुपेत्य जनेन जनालये जनमनःपरितोषकृते जनात्म कदापि रावणादिवत् परदाराहरणादिविषये प्रवर्त्तितव्यं, प्रत्युत रामभद्रवत्पितृमातृसुहृद्भ्रातृप्रदिष्टधा-

---

१ परमुत्कृष्टम् । २ भूषणरहिताः । ३ यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः । ४ विचाराः । ५ नितरामस्तं गतमासमंतादालोचनयुगलं येषाम् । ६ हितेन सह वर्त्तमानं सहितं, तस्य भावः साहित्यम् ।

मिकविषय एव सर्वदा सर्वथा सर्वैः प्रकारैः सर्वत्र सर्वैर्जनैः प्रवर्त्तितव्यामिति प्रतिपदं वैदिकशिक्षापरकं वाल्मीक्यादिमहर्षिनिबन्धनं केन न प्राशस्त्यमानीयते ?

तत्,कथमेवंविधानेकसत्फलप्रदातृकाव्यालंकारविषयनिराकरणे'काव्यालापांश्च वर्जयेदिति' शीर्षकलेखः साफल्यमनल्पमायेति मीमांसना सांप्रतमुपक्रम्यते ।

मद्बुद्धौ तु वेदमार्गमनादृत्य याद्दच्छिकविषयपरतया प्रबन्धकल्पनमेव निराकरणनिदानमाभाति,यदिदानीं रघुवंशकुमारसम्भवमेघदूतमाघकिरातनैषधकादंबर्यादिनानानिबन्धरूपेण तत्र तत्र परिणतमुपलभ्यते ।

पातञ्जले महाभाष्ये 'भ्राजा नाम श्लोकाः' इति शंकां पुरस्कृत्य "किं च भोः, श्लोका अपि प्रमाणम् ? किं चातः, यदि प्रमाणमयमपि श्लोकः प्रमाणं भवितुमर्हति;'यदुदुंबरवर्णानां घटीनां मण्डलं महत्पीतं न गमयेत्स्वर्गं किं तत्क्रतुगतं नयेदि'"ति प्रतिपाद्य च "प्रमत्तगीत एष तत्रभवतो यस्त्वप्रमत्तगीतस्तत्प्रमाणमिति" संहारोपि वैषयिककाव्यनिराकरणपरकः प्रदर्शित एव, अनुष्टुब्वृत्तादिलक्षणलक्षितेप्यस्मिन्पद्ये सुरापानादिवर्णनमेव वेदविरुद्धं प्रमत्तगीततां ध्वनयति; नैवं चेद्वदंतु सर्वेपि, किमत्र प्रमत्तगीतत्वम् ? समागतमेतावता सर्वेष्वपि पुराणपक्षानुगतेषु काव्येषु वेदविरुद्धवर्णनमेव निराकरणसूत्रम् ।

सामान्यतया काव्यमात्रनिराकरणपरं चेत्,कथं तत्रैव' भ्राजा नाम श्लोकाः" इति निलिखितम् । अथ च, "यस्तु प्रयुंक्ते, यदधीतमिति" पद्ययोस्तत्रैव वेदाविरुद्धनिरुक्तप्रतिपाद्यविषयकल्पनापरतया प्रत्यक्षे रुपलंभात् । वास्तवेपि वेदप्रतिपाद्यार्थविस्तारपरतया भुवनदीपकत्वाच्छ्लोका भ्राजा एव ।

कस्तावदाधुनिकेष्वनार्येषु पौराणिकेषु विद्वत्सु वक्तुमपि शक्नोति, यद्वेदविरुद्धविषयरहितानि रघुवंशादिकाव्यानि वेदप्रतिपाद्यधर्मप्रवर्त्तकानीति; न कर्हिचित् ।

प्रत्यक्ष एव यत्र रघुवंशे तृतीयसर्गे सुदक्षिणायौवनवर्णनं, षष्ठे मदोत्पादकस्त्रीचेष्टावर्णनं,सप्तमे विषयानन्दवर्णनं, वेदविरुद्धवैषयिकचेष्टावर्णनाय पूर्णतया प्रसक्तं

कालिदासस्य वेदविरुद्धचेष्टापरतया प्रमत्तत्वे, निरस्तापरप्रमाणापेक्षं परमं प्रमाणम् ।

"ऋतौ भार्यामुपेयादि"तिविधिवचनैर्यल्लोके स्वतःप्रवृद्धं विषयकरणं, तन्निरोध एव परमं वेदानुशासनमूलम्, किं पुनः फलं स्वाभाविकस्त्रीप्रवृत्तौ जनानां शृंगारादिना पुनरनुमोदनेनेति व्यर्थमेव कवीनां तत्र प्रयासकरणम् ।

कुमारसंभवे प्रथमाष्टमयोः सर्गयोर्मध्ये पार्वत्याः सर्वाङ्गवर्णनं, सुरतक्रीडा-वर्णनं च, प्रत्यक्षमेव कालिदासस्य वेदवैरुद्ध्ये प्रमाणम् । मेघदूतकाव्यकल्पनं तु प्रत्यक्षमेव वेदविरुद्धशृंगारपरम् । समुपलभ्यते चेदं भोजप्रबन्धे वृत्तं, यद्भोजराज-वनितायामासक्तः कालिदासः कविः, एकस्यां रात्रौ तद्द्वारं गतः सन्नंतर्गतं राजा-नमनुमीय तत्संगममलब्ध्वा वियोगे काव्यमत्रयमकलयत् ।

येषां ग्रंथानां मूलमेव प्रमादकाले समुत्पन्नं, वियुक्तेनाऽत एव प्रमत्तेन कविना यानि प्रयुक्तानि, पुनस्तेषां प्रमत्तगीतत्वे प्रमादमूलकत्वे च को नाम संशयो, यदर्थं प्रमाणांतरापेक्षा स्यात् ।

माघकविप्रणीतं शिशुपालवधन्तु ऋतुवर्णन--पुष्पावचय-- वनविहार-पानगोष्ठी--सुरत-चन्द्रोदय-पुनःपान—विषयक्रीडा—प्रभातवर्णनैः पूर्णमेव प्र-सिद्धं, लोके च दरीदृश्यते । एकस्यां रात्रौ यत्कृते काव्ये, मुहुर्मुहुर्मद्यपानविषय-क्रीडे समुपलभ्येते, कथं तस्य कवेः प्रमादे कोपि प्रमाणांतरमपि समाकांक्षेत ।

भारविप्रणीतं तु गंधर्वविषयक्रीडावर्णनैर्मद्यपानजलस्नानचन्द्रोदयाद्यनेकवद-बाह्यविषयैरभितोऽलंकृतं केन वा जनेन न नेत्रपात्रीकृतम् ?

श्रीहर्षकृतं नैषधकाव्यमपि केवलं नलदमयंत्योर्यौवनारंभसमुत्थविषयवर्ण-नेन परितः परिप्लुतं, विशेषतो दमयंत्याः प्रसंगवर्णनेन तत्रापि कुचजघनादिवर्णनेन च, यत्सकलकाव्यमूर्द्धन्यं पामरैः स्वीक्रियते ।

---

द्विविधाःकिल कवयो--विवेकिनोऽविवेकिनश्च तत्राविवेकिषु शास्त्रं नार्थ-दनाय, तस्मादिमे कालिदासाद्याः सर्वेपि कवयो विवेकशून्यमनस एव ।

कादंबरीवासवदत्तयोर्गन्धर्वराजकुमार्योर्वर्णनाय कृतप्रयासौ बाणभट्ट-सुबन्धुकवी तु प्रसिद्धावेव विश्वे, याभ्यामेकामेकां स्त्रियमुद्दिश्यैव सर्वमपि जन्म निर्यापितमभूत् ।

इतरदपि ऋतुशृङ्गारादि काव्यजातं, रसमंजर्यादिकं शाकुंतलाप्रभृति नाटकजातं च सर्वमपि समाक्रांतमेव विषयक्रीडाभिरभितः । किं बहुना, "काव्यालापांश्च वर्जयेदिति" शीर्षकलेखनिदानमेतदेव काव्यजातमुपलभ्यते ।

एकदेशस्थिता इमे दुष्टा विषयाः कथं काव्यमात्रं दूषयितुं समर्था इति शंकातिरोहितांतःकरणानां जनानां पुरस्तात्तु, विश्वनाथकविराजकथनमेव पूर्णतया समुत्तरम् ।

रसवत्पद्यांतर्गतनीरसपदानामिव पद्यरसे, प्रबन्धरसेनैव तेषां रसवत्त्वांगीकारादिवतो दोषवत्पद्यांतर्गताऽदोषवत्पदानामिव पद्यदोषे, प्रबन्धदोषेनैव तेषां दोषवत्त्वांगीकारादिति पक्षस्य सुतरां समुपलब्धेः ।

अत एव पूर्वापरविचारदत्तदृष्टयो लोकोपकाराय परित्यक्तसकलशारीरिकसुखाः सर्वथा मंत्रद्रष्टारो बालब्रह्मचारिणः श्री १०८ महर्षिदयानन्दसरस्वतीस्वामिवर्याः "सर्वथा विषसंपृक्तान्नवदिमे सर्वेपि ग्रन्था हेया" इति प्रावदन् ।

श्रीमन्महर्षिदयानन्दोद्देश्यपरिपूर्त्यै विन्यस्तानि गुरुकुलान्यप्येवंविधपुस्तकोपायनैराक्रान्तानीति सर्वथा शोचनीयतरः पन्था । प्रायेवंविधपुस्तकनिरीक्षणावसरे-को वा निरोद्धा स्यादिति प्रबलतरहेतोरत्र वेविद्यमानत्वात् ।

इतिहासपारवश्यात्तु काव्येष्वेवंविधप्रसंगसांगत्यमुपलभ्यत इति यत्कथनं तदपि बहु मन्दम्; नहि कवेरितिवृत्तमात्रेणात्मलाभः, इतिहासादेरेव तत्सिद्धेरिति ध्वनिकारमतस्याप्र सर्वथा जागरूकत्वात् ।

जागरूकेस्मिन्न्याये, नलदमयंत्योरितिहासपरं नैषधं, किरातार्जुनयोरितिहासपरं किरातार्जुनीयं, शिशुपालोपाख्यानपरं शिशुपालवधं चान्यदपि तत्तदितिहासपरं तत्तत्काव्यं सर्वमपि सर्वथा दोषजातपूर्णमेव ।

---

१ कथं पुनः काव्यव्रतिकासमुद्गमः ?

विहाय तस्मादेतत्सकलमपि विकलं पौराणिकपक्षानुगतं माघादिसाहित्य-जातमार्यैरार्षसिद्धांतानुगतं सर्वथा वैषयिकविनोदनोदनाभिरनाघ्रातं वैदिककाव्य-जातं संपादनीयमेव, नोचेद् गुरुकुलप्रतिष्ठितवर्णनीयवर्णवद्वर्णिनां कृते कानि काव्य-पुस्तकानि काव्यनिर्माणपाटवमापादयिष्यंति ? संपादयिष्यन्ति चेत्तान्येव काव्यल-तिकावदेकत्रकृतानि, किमन्यभव्यनव्यनिबंधबंधनप्रबंधैरितिचेत् ? विषसंपृक्तान्नव-त्सर्वथेमानि हेयानीति महर्षेर्दयानन्दस्य वचनपातनमापाततः समापतितं। पतितका-व्यान्यतः परिहाय, पतितपावनानि वनानि संश्रितैः पतितपावनैः काव्यान्यपि पतितपावनान्येव संपादनीयानि,यानि महर्षेर्मनोरथपूरकानि भवेयुः,न कदापि यथा-काकेभ्यः कालिमा दूरीभवितुमर्हति, तथैवं काव्येभ्यो विषयकथेति, विचार्यमेव सर्वैरपि मदुक्तवाक्यनिर्वाचनम् ।

विद्यालय-विश्वविद्यालय-महाविद्यालयाद्यनेकप्रकारप्रवर्त्तनैरियमेव सकल-कामदुघेति केनचिन्निमेषेण कथयंतोऽप्यकथयन्त इवाकर्त्तव्यतयेति परित्यज्य या-नत्रत्यानेषा शेषामपि शरीरस्य वैशेषिकदशामशेषतया वेशाभिवाह्यामेवाकरोदिति सर्वथायं करुणावसारः ।

वैदिकसाहित्यसंकलने कृतमहत्परिश्रमस्य महर्षेर्दयानन्दस्य कियानस्मिन्विषये परिश्रमो दृश्यत इति समाकलय्य, दत्तशरीरधनादेस्तस्य ऋणनिर्यातनाय किमन्यद-तःपरं कार्यं भवितुमर्हतीति विचार्य च, मयाप्यत्रविषये महान्परिश्रमो विधीयते, य-त्फलमनतिचिरादेव भारते भावद्भविष्यति सहृदयहृदयैरनुमोद्यमानम् ।

हलायुधवामनविश्वनाथजगन्नाथकेदारभट्टप्रभृतिभिरनार्यैर्वृत्तालंकारमये त-न्मूले विनाशिते शाखापल्लवादिमयस्य काव्यनाटकजातस्य कथं न विनाशः स्यादिति तु सर्वथा परभागमवाप्तमेव ।

सर्वथा निर्दोषस्य काव्यस्यैकांतमसंभवादित्यपि विश्वनाथकथनं मंदतरम्; सर्वथानिर्दुष्टमहर्षिमानससमुत्थवृत्तालंकारसूत्ररूपवेदांगस्यैकांततया दोषराहित्य-संभवात् ।

वैदिकविषयमवलंब्य प्रस्तुते काव्ये नवरसचमत्कारवैचक्षण्यं कथमापादनीयम्? इति समुत्थे शंकाप्रवाहेऽथर्ववेदीयशस्त्रकांडमुद्दिश्य वीररसवर्णना, तथेश्वरप्रार्थनाविषयमुपक्रम्य करुणरसप्रवर्तना, सृष्टिरचनाविषयमुद्दिश्याद्भुतरसवर्णना, शांतिप्रकरणमुपनिषज्जातं वा प्रस्तूय शांतरसवर्णना सर्वापि भवितुमर्हत्येवेति सुवचं समाधानम्।

संक्षेपेण मीमांसितेऽस्मिन्विषये भारताद्भारतीगमनं कथमभूदिति विचार्यते। मदनुमतौ तु वेदविरुद्धप्रमत्तकाविकलनारंभ एव भारतवर्षात्परस्वतया गमनारंभदिनम्; भारताद्भारतीगमनदिनमेव संस्कृतसाहित्यस्य वर्तमानदशारंभदिनम्।

किं बहुना; न केवलमियं संस्कृतसाहित्यस्यैव वर्तमानदशा, प्रत्युत संस्कृतव्याकरणस्यापि शोचनीयैव वर्तमानदशा, या पामरपिशुनतरभट्टोजिदीक्षितबुद्धिमान्द्येन भारतभूमिमुपागता।

धकिज्जालमनागेशम!यो भारतं सर्वायुमुड्भिः शेखरप्रभृतिभिरसद्ग्रंथै रापूरयास। किं केनाचिदार्यमार्गानुयायिना कदापि वक्तुं शक्यते, यदेतद्विधासद्ग्रंथपरिशीलनैः कश्चिदपि सचेता भवितुमर्हतीति, येष्वाद्यो मुनित्रयमितिश्लोक एव प्रत्यक्षरमशुद्धः; किमपरमुदीरयेयं, सर्वापि दीक्षितकृतिरशुद्धैव, शौंडिकाऽऽपणगतमद्यपात्रस्थितपयोवत्।

अत एव मनोरमायाः खंडनं जगन्नाथेन, शब्देन्दुशेखरखंडनं च विरजानंदपादै विहितं, यदधुना मद्वर्जं न कुत्राप्युपलभ्यते, यद्वर्णनं च बहुधा मत्कृतपाणिनीयसूत्रार्थप्रकाशे विशदतयोपनिबद्धमस्ति।

परं, यथा श्रीमद्विरजानन्दसरस्वतीसमुदयेन प्राचीनार्षव्याकरणरूपा सरस्वती समुदयमाप, यथा च श्रीमद्दयानन्दसरस्वतीसमुद्गमेन वैदिकधर्मरूपा सरस्वती गतापि लोकांतरं पुनरुदयमवाप, तथैव शिवशङ्करशर्मप्रभृतिकाव्यतीर्थकविरत्नादीनां समुदयेन संस्कृतसाहित्यस्य वर्तमानदशापि पूर्वभावमपहाय नियुक्तसरस्वतीसम्मेलनसभाऽजिरे वेदप्रतिपाद्यधर्मानुकूलकल्पनाभिरुदयमवापेति सर्वमवदातम्।

ओ३म्

पठिते निबन्धे पं० शालिग्रामशास्त्री निबन्धमालोचयन्नित्थमवोचत् "यद्यपि नात्र संशयः, प्रदर्शितं निबन्धकर्त्रा शब्दसङ्घटनपाटवम्, तथापि कविशिरोमणये कालिदासाय दीक्षिताय च यद्गालीप्रदानं, तत्सभ्यजनव्यवहारविरुद्धमिव प्रतिभाति नः । यदपि चाह कविरखिलानन्दः, 'शृङ्गाररसमयत्वादवैदिकानि कालिदासादिकाव्यानि,' तदेतद्रसेभ्यः पृथक्कृत एव शृङ्गाररसे वक्तुं शक्यते, नान्यथा । अपि वाल्मीकिमुनेर्वाङ्मयेऽपि दृश्यन्ते शृङ्गारप्रसङ्गा इति कथन्तस्यापि न स्यादवैदिकत्वम् ? पृथक्कृत्यापि च शृङ्गारभागं शक्या वर्णिनः काव्यान्यध्यापयितुम् । नहि धर्मप्रतिपादनाय प्रवृत्तानि काव्यानि, अपि तु "कान्तासम्मिततयोपदेशायै" वेति विचिन्त्य विरमणीयं पण्डितविगर्हणाच्छ्रीमता ।" पं० मंसाराम स्तदनुसमुत्थायावोचत्—"निबन्धा ह्यर्थप्रतिपादनाय पठ्यन्ते, नात्मीयपदसञ्चयचातुरीप्रदर्शनाय । किन्तैः विविधकाव्यजातात् सङ्गृहीतैरेकत्रसमुच्चितैः पदैः, यैः श्रोतारो न किमपि बुध्यन्ते । इदं हि दर्पणकारेण दूषणेष्वन्यतमसुक्तम् । निबन्धकर्त्रा पुनर्नात्रावधानमदायीति शोकास्पदमेतत् । यदप्युक्तङ्कविरत्नेन गुरुकुले शृङ्गारबहुलानामवैदिकानाङ्काव्यानामध्यापनमनुचितमिति, तदविचारनिदानमेव; न ह्यसमीक्ष्य, अविचिन्त्य च प्रबन्धकर्तारः काव्यानि प्रतिनाङ्करेषु समर्पयन्ति, येन तेषां क्षतिकरणे क्षमताऽऽशङ्क्येत । अधीत्यापि च रघुवंशादिकाव्यानि शिवकुमारादयो विद्वांसः खलु सुचरिता एव सुधियश्च, तेन श्रीमतोऽनुमानेऽवापोद्वापाभावाद् व्याप्तिरेव नास्ति" इति । ततो ब्र० हरिश्चन्द्र इत्थमवोचत्, "शोकास्पदमिदं यदन्यत्रैव विवेचनायां कर्तव्यायां निबन्धकर्त्राऽन्यत्रैव स्ववाक् प्रयुक्ता । नहि केवलं कालिदासदीक्षितादिनिन्दाभिरेव संस्कृतवर्तमानदशाविषयः समालोचितो भवति; यदि कालिदासो दुष्क-

विद्वांसः ?, कौ वा, यदि च दीक्षितो गर्भदासीपुत्रोऽपि पण्डितेषु सम्मानमवाप, तत्र को हेतुः ? कथमियं शोचनीया दशा निवर्तयितुं शक्या ? इत्यादि सर्वमपि पदार्थजातं यावन्न निर्णीतम्भवति, तावन् निरर्थक एव सर्वोऽपि प्राक्तनानां विचक्षणानां निन्दाक्रमः । संस्कृतपण्डिताः कुतो मिथो व्यक्तिगतगुणदोषप्रदर्शनपुरस्सरमेव विदन्ते ? इत्यत्रापि कारणं चिन्तनीयम् । तदैव च कथमपि संस्कृतदशा समुन्नेतुं शक्येति । यत्किमपि चोक्तं निबन्धकर्त्रा, सर्वमपि तत् प्राचीनान् पण्डितान् अवलम्ब्यैवोक्तम्, नार्वाचीनान् । नापि च केवलं शृङ्गारवर्णनापरत्वादेव कालिदासग्रन्थानां गर्हणीयता सम्भवति । भूतवस्तुप्रदर्शनपरा हि कवयः, यदि जनानां न स्याच्छृङ्गाररसकर्मसु प्रवृत्तिः, युज्येत तदा कवेर्दूषणम्, तदभावे तु जनानान्तादृशप्रवृत्तेरनुचितमेव तदाख्यानपराणां कवीनां कलङ्कनम् । वर्णिभिस्तु तत् सर्वथा हेयमेव; नात्र कस्यचिदपि संशीतिरस्ति ।

संस्कृतभाषादुर्गतिहेतुश्चान्यतमोऽस्याः भाषायाः समासबहुलत्वमेव । न स्वस्वाभाविकी वाणी भाषाऽऽख्यां लब्धुमर्हति । अतो यथा अल्पसमासा स्याद् वाणी, तथैव यतितव्यम् । अपरो हेतुर्येन संस्कृतप्रचारः संस्कृतसौन्दर्यञ्च सङ्कोच्यते, स खल्वस्या अधिगमस्य दुरधिगमव्याकरणजन्यत्वमेव । अत एव च अतिशयघोषणेन बुद्धेरस्फुरणशीलता जायते, गतानुगतिका एव संस्कृताध्यायिनो जायन्ते" । इति ।

ततो विद्यार्थी देवदत्तपन्तः प्राच्यविद्यानाम् प्रशंसनमेव श्रेयस्करं न विगर्हणमिति स्थापयामास ।

तदनु परोपकारिसम्पादकः पं० पद्मसिंहो निरदर्शयद् यन्न केवलं वर्णिभिरनादेयत्वादेव काव्यानामुपेक्षणीयता आक्षेपयोग्यता च सम्पद्यते।कवयो हि यथार्थवादिनो, न ते व्यक्तिविशेषधियमुद्दिश्य प्रवर्तन्ते।तेन शृङ्गारादिरसवर्णनपरायणा अपि भूतवस्तुवादित्वात् कवयोऽगर्हणीया एवेति । तदनु ब्र० जयचन्द्रो निबन्धकर्तुः पक्षम्परिपुष्णन् 'कविर्धर्मोपदेष्टैव भवितुमर्हति,

कालिदासादय एव तद्विपरीतार्थोपदेष्टृत्वादकवय एवेत्याचष्ट । स इत्थमयूयुजत्, यथा न केवलङ्गुणार्थकथनादेव ग्रन्थस्यानुपादेयता प्रसज्यते, अपि तत्र प्रवर्त्तकत्वमुपादायैव । न चेदेवं स्यात्, स्वामिदयानन्देन प्रदर्शिता अपि भूयांसः प्रसङ्गाः हेयत्वम्प्राप्नुयुः । कालिदासादिभिर्वर्णिताः शृङ्गाररसमय्यो वर्णनास्तु खलु तमर्थं रोचकतया मनःप्रवृत्तेर्विषयत्वन्नयन्ति ।"

तस्मिन्विरतवाक्ये ब्र० भरद्वाजः संस्कृतभाषाऽनुन्नतौ तदध्यापकानामलसतैव हेतुरित्यवर्णयत् ।

तदनु पं० रलारामशास्त्री संस्कृतसाहित्यविषयं लक्ष्यीकृत्य इत्थमभाषत, "संस्कृतसाहित्यस्य निपातक्रमो भारते यवनपदप्रवेशदिनादेव समारभ्यते । ततः प्राक् पुनर्विक्रमराज्ये धीवरा अपि, कुलाला अपि, कुविन्दा अपि च, संस्कृते परमपाण्डित्यमलभन्त । यवनानामागमे तु तदधीना भारतीयाः उदररक्षार्थलग्नत्वाद् वा, विदेशीयभाषाऽऽरुचेतस्त्वाद्वा, संस्कृतोन्नतौ नाभ्यधिकम्मनो ददुः । ततः कालादद्यावधि तत एव कारणात् नाभूत्तत्प्रचारः । अद्यत्वे संस्कृतप्रारम्भकग्रन्थाः, तदध्यापनप्रणाली चेत्युभयमपि न त्युत्कृष्टम् । साधारणजनेषु संस्कृतप्रचाराय "संस्कृतप्रवेशिका" सदृशाः प्रारम्भकोपयोगिनो ग्रन्थाः निर्मातव्याः।" योग्योक्त्वा एतदप्यवदद् यत्, न स संस्कृतभाषां वैजनप्रसृतां विधातुर्मुचितम्मन्यते, किन्तु स तदध्ययनन्तरस्यग्रन्थानार्य्यभाषायामनुवादङ्कर्तुमेवास्या अधिगन्तुं योग्यत्वमभिप्रैति

ततो निबन्धकर्तुर्भ्राता पं० सुबोधानन्दो निबन्धकर्तुर्भ्रातृत्वादाशङ्कितसम्भवामाशङ्काम् पक्षपातितया अपनुदन्, 'निबन्धकर्त्रा निबन्धे कौमुद्याः साद्यन्ततया अशुद्धत्वमुक्तं, तत्कथमि' त्यपृच्छत् ?

ततः केऽपि सदस्याः देववाण्यां वक्तुमशक्नुवन्तः सभापतेरार्य्यभाषयैव वक्तुमादेशमपृच्छन्त । आज्ञप्ते चार्य्यभाषाप्रयोगे सभापतिना, अध्यापकरामदेव इत्थमार्य्यभाषयां वक्तुमुपचक्रमे ।

" माननीय सभापते तथा सभ्यगण, यद्यपि दर्शनों के विषय में संस्कृत से विशेषतया विज्ञता न रखने वाले मनुष्य का बोलना उचित तथा सम्बद्ध नहीं, तथापि आज के विषय पर बोलना संस्कृत के विद्वानों को छोड़कर अन्यों के लिये भी असम्भव नहीं है। विषय यह है कि संस्कृतसाहित्य की उन्नति कैसे हो सकती है। साहित्य शब्द बहुत व्यापक है। दर्शन, उपनिषद् तथा वेद यह सभी कुछ साहित्य या (literature) शब्द के अन्तर्भूत समझा जाता है। परन्तु निबन्धकर्ता ने, तथा अन्य भी सब वक्ताओं ने साहित्य शब्द से काव्य का ग्रहण किया है। दर्शनादियों को छुआ भी नहीं। पहिली बात जो संस्कृत साहित्य के प्रचार को रोकती है वह संस्कृतभाषालेखकों की कठिनशब्दप्रियता है। संस्कृत के पण्डितों के सौ सौ गज़ लम्बे वाक्य तथा समास लिखने से इतना प्रेम है कि इन के योग से उन की भाषा साधारण लोगों से अज्ञेय हो जाती है। स्वामी दयानन्द जी की भाषा को देखिये, वह कैसी सरल है, उस में कहीं पण्डिताई दिखाने की चेष्टा करने का चिन्ह नहीं।

एक महाशय ने कहा था कि कालिदास ने शृङ्गाररसबहुल काव्य लिखकर पाप किया। परन्तु कवियों का काम ठीक ठीक चीज़ का वर्णन करना है। शेक्स्पीयर के नाटकों को देखिये, उनमें आप सब प्रकार के वर्णन पायेंगे। परन्तु क्या इस से किसी ने उसे पापी कहा?

और कुछ भी हो, परन्तु कालीदास को जो दूषित करता है तथा उसे अनुपादेय समझता है वह संस्कृत भाषा से विद्रोह करता है। यदि तुम कालिदास को संस्कृत से निकाल दोगे, तो गैटे जैसे विद्वान् किस ग्रन्थ पर मोहित होंगे? कालीदास सारे संसार के महाकवियों में से एक है। वह कहां कहता है कि मेरे ग्रन्थ गुरुकुल में पढ़ाने योग्य हैं। मैं तो कहता हूं कि यदि सत्यार्थप्रकाशादि के गृहास्थाश्रमादि प्रकरणों से कुछ भाग निकालना ब्रह्मचारियोंके लिये हितकारी समझा जावे तो कोई बुरी

ज्ञान नहीं। कालीदास प्रकृति को समझता था और खूब समझता था। इसी से उस का मान है। क्या कोई पुरुष सौगज़ लम्बे समास लिखकर ही पण्डित तथा कवि कहा सकता है?"

वर्णितवर्णनीये म०रामदेवे कविमह्वाराणीशङ्करः साम्प्रतिककवीनां शृङ्गाररसप्रियत्वाद् दुराचारत्वाच्च गर्हणीयतामेव प्रत्यपादयत्। सोऽकथयद् यन्न भाषालालित्यकारणात् तल्लेखको निन्दामर्हति, भाषया भाव्यमेव सरसया ललितया चेति। तदनन्तरम्पण्डितधर्मदेवः संस्कृतभाषाया अनुन्नती तदध्यायिनामालस्यमेव कारणमित्याचष्ट। स प्रत्यपादयद्, यदभाषणमेव संस्कृताप्रचारे मुख्यो हेतुः, आदौ तावत् पण्डिताः संस्कृतसम्भाषणमेव न विदधति; विदधतिचेद्तिजटिलाम् पद्धतीमाश्रितया, तेन भाषा न प्रचलिततामभिगन्तुमर्हति।

एवंच समाप्तेषु वक्तृषु कालस्यावशिष्टत्वात् सभापतिर्वितीर्णवक्तृताकानपि पुनर्विवक्षून् वक्तुमादिष्टवान्। तदनुसारञ्च पं०मेलारामशालिग्रामौ ब्रह्मचारिहरिश्चन्द्रश्च स्ववक्तव्यानि व्यतार्षुः। त्रयोऽपि ते संस्कृतसम्भाषणस्यैवावश्यकत्वम्प्रत्यपीपदन् ब्र०हरिश्चन्द्रस्त्वेतावद् विशेषतः प्रतिपादयामास यत्, संस्कृतभाषा विदुषामेव भाषा, भावप्रकाशनद्वारञ्च स्यात्।

एवं समाप्तासु सर्वासु वक्तृतासु, सभापतिर्निबन्धलेखकं पं० अखिलानन्दमाशङ्कानां समुत्तरणाय प्रार्थयत्।

सोऽवदत्, "यै महाशयैरहङ्कालिदासादीनाक्षिपामीत्युक्तं, तद्व्यर्थमेव; नाहं तमकविम्मन्ये; मन्येऽहन्तमशेषकविशेखरम्; परन्तस्यावैदिकत्वङ्कथमपि नापन्होतुमुद्यतोऽस्मि। सन्नपि कविस्सोऽवैदिक इति नैतद्विरुद्धम्। यत्तु कैश्चिदवाचि, न शतगज़लम्बायमानानि वाक्यानि संस्कृतभाषामाभूषयितुं क्षमानीति, तत्तु तद्भाषासाहित्यानभिज्ञतामूलकमेव। यत्तु वक्तृभिर्वर्तमानभाषास्थितेरुद्धरणार्थं सामयिकपुस्तकादिभावः आवश्यक इत्यभिहितं, तत्र न मे

कथमपि विसंवादः। अनुमन्येऽहन्तत्, प्रयते च तदर्थसाधनाय यथाशक्ति। सेवकोऽहं स्वामिदयानन्दस्य, आर्य्याणाञ्च। न मत्तोऽनर्थसमुद्भव आशङ्कनीयः।

"यत्तु सुबोधः कौमुदीविषयेऽपृच्छत्, तत्रोच्यते; सिद्धान्तकौमुदी साद्य-न्तमशुद्धेति मदीया स्थापना। तत्रोदाहरणरूपेण "मुनित्रय" मित्याद्या-दिममेव पद्यं समालोच्यमानं कौमुदीकृतः पाण्डित्यं द्योतयिष्यति। मुनि-त्रयमित्यत्रादौ मकारविन्यास इत्याद्यं दूषणं साहित्यसम्बन्धि। अपरञ्च दूषणमादौ जगणविन्यासः। तृतीयाऽशुद्धिः परिपूर्वकस्य भूधातोर्विवेचनार्थे प्रयोगः, "परौ भुवोऽवज्ञाने" इति सूत्रे पाणिनिना परिपूर्वकस्य भूधातो-रवज्ञानार्थताया वचनात्।

"यद्यन्यत्रापि काव्ये स्यादेतदर्थकः प्रयोगः, सोऽप्यशुद्ध एव विज्ञेयः। यवनैरेवास्माकं देववाणी पालितेत्यत्र न मे विवादः। अनुमन्येऽहमिदम्। परं, नाहङ्कथमपि शृङ्गारवर्णनापक्षपाती भवितुं शक्नोमि; अवैदिकं हि तत् कृत्यमिति"।

एवं सर्वेषां वक्तॄणां वचनान्यालोचितवति निबन्धकर्तरि सभापतिरा-त्मीयमेकमन्तेवासिनं सर्वेभ्यो धन्यवादपुरस्सरं सभाविसृष्टिविज्ञापनाय आज्ञापयत्। अन्तेवासिना च पालितायामाज्ञायाम् प्रथमदिनस्याधिवेश-नमवसानमगात्।



द्वितीयदिनाधिवेशनम्

एकादशी

यथासमयमुपस्थिते पण्डितसमाजे सभापतौ च, पं० शिवशङ्करकाव्यतीर्थः सभापतेराज्ञया स्वीयमिमं निबन्धमपठत्:—

## षड्दर्शन विरोधाविरोध विचारः

### उपोद्घातः

अधिकृत्य षड्दर्शनानि प्रवर्तिष्यतेऽद्य विचार इत्यवलोक्य समुद्भवत्यस्माकमन्तःकरणे महान् समुल्लासः। सत्यमिदमित्थमेव यदि देशज्ञाः परीक्षकाः प्रेम्णा संगत्य जगदुपकाराय प्रमेयनिश्चयार्थं प्रयतेरन्नाम, तर्हि, सन्तानानां पन्थाः सरलो निरुपद्रवो राजपथ इव भविष्यतीत्याशास्महे। मनुष्याः स्वल्पज्ञाः सन्ति, अतः पदे पदे स्खलन्ति, भ्राम्यन्तिचेत्यत्र तु न सन्देहः। किन्तु, आत्मानं सर्वज्ञं मन्यमाना इदानीमपि विद्यन्ते देशेऽस्मिन् परःसहस्राः पुरुषाः, परमभाग्यमेवैतद्देशस्य। को हि खलु ईश्वरस्यानन्तां विभूतिं परिच्छेत्तुं समर्थः। परन्तु, विशेषतो ज्ञानग्रहणायैव मानवी सृष्टिः प्रकाशिता परमात्मना इत्यनुमिमीमहे। अतः ज्ञानोपलब्धये यावदायुषं यथाशक्ति प्रवर्तितव्यमित्यस्माकमाग्रहपुरःसरं सम्मतिरस्ति। अतएव, आधुनिका इव पुरातनाः पुरुषाः अपि न सर्वज्ञा आसन्नित्यस्माकं निश्चयः। षड्शास्त्रप्रणेतारस्तु उदारहृदयाः स्वतन्त्रमतय आसन्; लोकोपकाराय च षड्दर्शनानि विरचय्य, अनुसन्धानमार्गप्रणालीं स्थापितवन्तः। 'वयं सर्वज्ञाः, अस्माकमुपदेशः सम्यग्ज्ञानोपबृंहितः, अतोऽत्र न विवादितव्यं, यथोपदिष्टमेवावधार्य्यम्, ईदृगाशयास्ते महाशया न आसन्। अतः प्राग्विवेचनाद् विनयपुरःसरं लब्धवर्णेभ्यः परीक्षकेभ्योऽभ्यर्थयामहे यत्, 'पूर्वैः पूर्वतरैश्च शिष्टैः परिगृहीतत्वान्नात्र प्रत्यवस्थातव्यं, किन्तु यथानुशासनमेव प्रत्येतव्यम्, तथाच पूर्वाचार्य्याणां विशेषाऽऽदराद्वा, विज्ञानाधिक्याद्वा, सम्यग्द्रष्टृत्वाद्वा, सिद्धत्वाद्वा, त्रिकालदर्शित्वाद्वा, अस्माकन्तु तद्वैपरीत्यात् तदुक्तयो न निराकरणीयाः, न च संशयपदं नेतव्याः" इति न कदापि मनसाऽवधारणीयम्; सत्यासत्यविवेकलोपप्रसंगात्। दृश्यन्ते च

पूर्वाऽऽचार्य्या अपराचार्य्यै निगृह्यमाणाः । यास्काचार्य्यचरणा गार्ग्यकौत्सयोर्मतं प्रत्याचक्षाणा दृश्यन्ते । श्रीमच्छङ्कराचार्य्यो ब्रह्ममीमांसाव्यतिरेकेण अन्येषां सम्यग्दर्शनाऽपादिष्टानामपि शास्त्राणामसारतामुद्भावयति । स्वयमेव षट्शास्त्राणि अन्योऽन्येषां वादानां प्रत्याख्यायकानि प्रतिभान्ति, " न वयं षट्पदार्थवादिनो वैशेषिकादिवत् " " नाविद्यातोऽप्यवस्तुना बन्धायोगात् " इत्यादिना सूत्रजातेन, सांख्येन वैशेषिकमायावादाभ्युपगमौ नाक्षिप्येते किम् ? " रचनानुपपत्तेश्च नानुमानम् " "पयोऽम्बुवच्चेत्तत्रापि" " ईक्षतेर्नाशब्दम् " " महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् " " उभयथापि न कर्म्मातस्तदभावः" इत्यादीनि सूत्राणि प्रारभमाणेन वेदान्तेन सांख्यवैशेषिकप्रभृतीनां प्रगाढयुक्तिभिर्दृढीकृतान्यपि, आप्तैर्मोक्षसाधनत्वेन परिगृहीतान्यपि, श्रुतिस्मृतिप्रमाणैराभासितान्यपि मतानि किं न प्रत्याख्यायन्ते ? आस्तां तावत् । यस्मिन् देशे विचारस्वातन्त्र्यं लोकैर्नाभिनन्द्यते, प्रत्युत निन्द्यत एव, न कदापि स देशः कल्याणश्रेणिपरम्परामारोहन्नभ्युदयगिरिशिखरं प्राप्स्यति । इह खलु सर्वे आचार्य्या भगवदवतारत्वेन वा, देवतांशत्वेन वा, येन केनापि महाऽद्भुतप्रकारत्वेनैव स्वीकृत्य यदाप्रभृत्यवलोकिताः, ब्रह्मवत्पूजिताश्च; एवं वेदवाक्यवत् तद्वाक्यान्यपि अप्रत्याख्येयानि, अमीमांसनीयान्येवचेत्यवधारितं जनैः,तदाप्रभृत्येव नैष देशोऽनुगृहीतो महर्षिभिर्महाभाग्यैः। व्यासो भगवदवतारः,कपिलस्तादृगेव,पाणिनिः साक्षाच्छङ्करः,पतञ्जलिः सहस्रमूर्धा शेषः, भास्कराचार्य्यो भास्कर एव, कालिदासो भगवत्या पुत्रीकृतः, धन्वन्तरिर्वारिधिमथनोद्भूतः परमेश्वर एव, इत्थं सर्वे पुरातना विद्वांसो देवतांशप्रभवा एवाङ्गीक्रियन्ते; किन्त्वेषा मतिः सर्वथा ह्रासकुपथगामिन्येव । 'पूजिता आदृताश्चैते माभूवन्नाम', एवंविधस्याऽऽशयस्याऽऽस्पदं वयं न भवेम कदाचिदपि; वयं सर्वान् चिरन्तनानाचार्य्यान् भूयो भूयो नमस्कुर्मः, हृदा वयं तानाद्रियामहे; किन्तु, "यद्यत्तैरभिहितं तत्तत् सर्वमेव तथैवाभ्युपगन्तव्यम्, तैश्च यथार्थ एव सर्वो विहितो, नचात्र अयथार्थलेशोऽपि विद्यते, न तदुक्तमस्माभिरर्वाचीनैः प्रत्याख्येयं, विचिकित्सितव्यंवा," इति वयं नोररीकुर्म्मः । अतः सर्वैरुदारहृदयैः पक्षप्रतिपक्षविरहितैर्यथार्थं बुभुत्सुभिः सत्यं जिज्ञासुभिश्च भाव्यमिति सर्वानुपस्थितान् महाभागान् प्रार्थयामहे ।

सन्ति लोकेषु सुप्रख्यातानि सम्यग्दर्शनानि सांख्य-योग-न्याय-वैशेषिक-कर्म्म-मीमांसा-ब्रह्ममीमांसाभिधानि षट्शास्त्राणि । तत्रोत्तरे मीमांसे न स्वातन्त्र्येण कमप्यपूर्वमर्थं निरूपयितुं प्रवृत्ते स्तः । वेदान् ब्राह्मणानि च समन्वेतुं कर्म्ममीमांसा, वेदानुपनिषदश्च संगमयितुं ब्रह्ममीमांसा प्रवृत्तेत्येतत्तच्छास्त्राऽध्ययनेन प्रतिभाति । अवशिष्टानि सांख्यप्रभृतीनि चत्वारि शास्त्राणि श्रुतीरनुरुन्धानान्यपि न पारतन्त्र्यमनुज्झित्वा शासतीत्येषोस्ति बहूनां शिष्टानामभ्युपगमः।

तत्र पदार्थानधिकृत्य ब्रूमस्तावत् । सांख्याः खलु प्रधानपुरुषौ द्वावेव पदार्थावभ्युपयन्ति, अत्रेश्वरस्य प्रतिषिध्यमानत्वात् । योगमतावलम्बिनः, तावीश्वरश्चेति पदार्थत्रयं मन्यन्ते । गोतमः "प्रमाणप्रमेयसंशयादि" षोडशपदार्थवादी । कणादः खलुः 'द्रव्य-गुण-कर्म्म-सामान्य-विशेष-समवाया' इति षट्पदार्थान् स्वीकरोति । कर्म्ममीमांसायाः प्रायः पदार्थानामियत्ताकरणे नाग्रहोस्ति, कर्म्मनिरूपणे निष्प्रयोजनत्वात् । ब्रह्ममीमांसा ब्रह्माख्यमेकमेव पदार्थमभ्युपगच्छति ।

जीवात्मानमधिकृत्य तावद्ब्रूमः। अस्त्यात्मा शरीरेन्द्रियपञ्जराध्यक्षः शरीरेन्द्रियव्यतिरिक्तो ब्रह्मणो भिन्नो नित्यःकश्चित्प्रमेयविशेष इत्यत्र वेदान्ताद् ऋते सर्वास्तिकशास्त्राणामैकमत्यमित्यत्र तु न संदिह्मः। किन्तु, स कीदृगस्ति? अणुपरिमाणः, आहोस्विन्मध्यमपरिमाणः, उत विभुपरिमाणः? पुनः सगुणो वा, निर्गुणो वा? पुनरेक एव प्रतिशरीरमुत प्रतिशरीरं भिन्नोऽनन्तोस्ति? पुनः, कादाचित्कचैतन्यः, उत नित्यचैतन्यः? इत्येवंविधेष्वर्थेषु सर्वेषामास्तिकशास्त्राणां विरोधोऽस्ति नवेति प्रथमं तावद्विचार्य्यते। तत्र सांख्यानामेषोऽभ्युपगमः, जीवात्मा नित्यचैतन्यः शुद्धो बुद्धो मुक्तस्वरूपः सर्वज्ञो विभुपरिमाणोऽनेकश्च। चेतनोपि सन् जीवात्मा न किमपि चेततीत्याश्चर्य्यमेव सांख्यमतं प्रतिभाति परीक्षकाणाम्। एवमस्तु । अयमभिप्रायः सांख्याचार्य्याणाम्, नायं जीवः सुखी, सुखगुणानभ्युपगमात् । नायञ्च दुःखितः, दुःखधर्म्माऽनङ्गीकारात् । नायं प्रयत्नादिमान्, निखिलगुणाधानप्रतिषेधात् । एष जीवः कर्तापि सन् न किमपि करोति, द्रष्टापि सन् न किमपि पश्यति, भोक्तापि सन् न किमपि भुङ्क्ते, अर्थात् कर्तृत्व-द्रष्टृत्व-भोक्तृत्वाद्येव धर्म्माः

वास्तविकत्वेन जीवात्मनि न वर्तन्ते; किञ्च, अचेतनायां बुद्धौ वर्तमानाः, आत्मनि प्रतिफलिताः, आत्मानं कर्तारमिव द्रष्टारमिव भोक्तारमिव सुखिनमिव दुःखिनमिवेत्येवंविधं विदधति। प्रथमन्तु, एष पक्षः सर्वथा दुर्बोध एवास्माकम्। कथं? जीवात्मा पश्यन्नपि न पश्यति, कुर्वन्नपि न करोति इत्येवंजातीयकानां वाक्यानां कोऽभिप्रायः सेत्स्यति? यद्यात्मा स्वयं न पश्यति, किन्तु बुद्धिः पश्यति, तत्रात्मनि द्रष्टृत्वमुपचर्य्यते; तर्हि, अचेतना बुद्धिः कथं पश्येत्? कथञ्चात्मने निवेदयेत? निवेद्यापि किं करिष्यति? निवेदनेन किं प्रयोजनं निःसरिष्यति? अविकारित्वात्, निवेद्यमानोऽपि भूयोभूयः प्रार्थ्यमानोऽपि बोध्यमानोऽपि जीवो जडवत् न किमपि वक्ष्यति; अतो निवेदनमपि निष्प्रयोजनमेव। अहो! 'चेतनो जीवो न किमपि करोति, अचेतना बुद्धिः सर्वं सम्पादयति, इति बोद्धुं कः शक्नुयात्! अन्यच्च, नित्यचैतन्यो जीवात्मेति सांख्याचार्य्या अभ्युपयन्ति; तर्हि सुषुप्तिमूर्छाद्यवस्थायां कथन्न चेतयते? एवं, बाह्येन्द्रियाणामपि अनर्थकत्वमेव समायाति। विषयाभावाच्च चेतयितृता सुषुप्तिमूर्छाद्यवस्थायामिति चेत्, एतदप्यसमंजसम्; तत्रैव सर्वविषयोपलब्धेः। अन्यच्च, 'जीवात्मा विभुरस्ति' एषोऽप्यभ्युपगमोऽस्माकं दुर्बोध एव। एकैको जीवात्मा यावद्ब्रह्माण्डमभिव्याप्य तिष्ठति; योऽयमात्मा मयि सएव भवत्स्वपि, स एव सूर्य्याद्यखिलपदार्थेष्वपि, तस्यैवैको भागः सूर्य्याग्निना दह्यते, एकश्चाब्धौ निमज्जति, सिंहे तिष्ठन् आक्रामति, अजे तिष्ठन्नाक्रम्यते; एवं न कर्म्मफलभोगाय देहाद्देहान्तरं गच्छति, न च पुण्यभोगाय कुत्रापि याति आयाति वा, मृतेऽपि देहे तत्रैव तिष्ठति, तत्र पुराऽसीत, तत्रैव स्थास्यति, अचेतनं लिङ्गमेव सर्वत्र गमनागमनं करोति; इत्यादृक् सिद्धान्तः कस्य पुरुषस्य बुद्धिपथमारोक्ष्यति? अन्यच्च, विभुत्वमभ्युपगम्यापि तद्विरुद्धं जीवात्मनो ........................ भिन्नत्वं प्रशास्ति, इदमपि सांख्यमतेन दुर्ज्ञेयमेव। जीवस्य विभुत्वं स्वीकृत्यापि प्रतिशरीरमेकैको जीवो भिन्नो भिन्नो व्यवस्थित इत्युपदिशतां सांख्यानां मते कथं न वक्ष्यमाणा दोषाः प्रसज्येरन्। एकस्मिन् मृते कथं न सर्वे म्रियन्ते? एकस्मिन् दुःखिते कथन्न सर्वे दुःखिनो भवन्ति? यदि ते ब्रूयुः, उपाधिभूते लिङ्गे सर्वं सुखदुःखादिकं वर्तते, तच्च प्रतिशरीरं भिन्नं परिच्छिन्नञ्च, अत एकस्मिन् विकृतेऽपि अन्योऽविकृतस्तिष्ठतीति; एतदप्यसमंजसम्; कथम्? तेनलिङ्गेन सर्वात्मनां सम्बन्धोऽस्ति नवा? यद्यस्ति, तर्हि, एकस्मिन्

दुःखिनि भवेयुः सर्वेऽपि दुःखिनः । यदि येन लिङ्गात्मनोपहितश्चेतनः कर्म्म करोति स एव तेन फलभोक्तेति ब्रूयुः; इत्यपि असमञ्जसम् । कथम् ? यस्मिन् काले एको जीवात्मा लिङ्गात्मके देहे निजचैतन्यच्छायां प्रतिफलयति तदा किं तत्र स्थितानामनन्तानां जीवानां स्वस्वचैतन्यप्रतिबिम्बप्रदाने अस्ति कश्चित् प्रतिबन्धो येन तत्कर्तुमनर्हास्ते भविष्यन्ति। इत्यवस्थायामेकेनैव जीवेनोज्ज्वलितं लिङ्गं नान्यैरिति कथमवधारयितुं शक्यम् ? अगत्या सर्वैरुज्ज्वलितं लिङ्गं सर्वानेव जीवान् दुःखिनः कर्तुमर्हति । इत्थमेकस्मिन् मृते म्रियेरन्नाम सर्वे । पुनश्च, सर्वज्ञो जीवात्मेति अभ्युपगम्यते सांख्यैः । कथं न सर्वस्मिन् काले सर्वं जानाति ? उपहितः सन् न सर्वं जानातीति चेत्, अहो नहि कश्चित् गृहादिना वा वस्त्रादिना वोपाधिविशिष्टो ज्ञानी अज्ञानी भवति, पण्डितोऽपण्डितो दृष्टः । एवं विवादोपि माभूत्, चेतन आत्मैव विवदते, अहमस्मि, नास्मि, अहं सुखी, अहंदुःखीति । एवमस्तु ।

तत्र सांख्यकल्पितप्रधानस्य सिद्धिं प्रत्याख्यातुं "रचनानुपपत्तेश्च नानुमानम ।१। प्रवृत्तेश्च । २ । पयोऽम्बुवच्चेत्तत्रापि । ३ । व्यतिरेकानवस्थितेश्चानपेक्षत्वात् । ४ । अन्यत्राभावाच्च न तृणादिवत् । ५ । अभ्युपगमेऽप्यर्थाभावात् । ६ । पुरुषाश्मवदिति चेत्तथापि । ७ । अंगित्वानुपपत्तेश्च । ८ । अन्यथानुमितौ च ज्ञशक्तिवियोगात् ।९। विप्रतिषेधाच्चासमञ्जसम् । १० ।" इति दशसूत्राणि एकस्मिन्नेव स्थाने, "ईक्षतेर्नाशब्दम् । कामाच्च नानुमानापेक्षे" त्यादीनि चानेकानि सूत्राणि निर्मितानि न दृश्यन्ते वेदान्तशास्त्रे ? ब्रह्ममीमांसा पदे पदे सांख्याभ्युपगमं प्रत्याचष्टे । उक्तसूत्राणि व्याचक्षाणेन श्रीमता शङ्कराचार्य्येणाभिधीयते, "तत्र सांख्या मन्यन्ते—इत्यारभ्य-तस्मादप्यसमञ्जसं सांख्यदर्शनम्" इत्यन्तम् ।

सम्प्रति कणादपरिकल्पितपरमाणुकारणवादादि मतं कृष्णद्वैपायनो व्यासो वक्ष्यमाणसूत्रजातेन प्रत्याचष्टे :—

(१) रचनानुपपत्तेश्च नानुमानमित्यादीनां (अ० २ पा० २ सू० १) विप्रतिषेधाच्चासमंजसमित्यन्तानां (अ० २ पा० २ सू० १०) दशसूत्राणां व्याख्यानावसरे, ( निर्णयसागर मुद्रिते वेदान्तभाष्ये ४११ पृष्ठादा ४२५ पृष्ठम् )

"महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ अ० २ पा० २ सू० ११ ॥ उभयथापि न कर्म्मातस्तदभावः । १२ । समवायाभ्युपगमाच्च साम्यादनवस्थितेः । १३ । नित्यमेव च भावात् । १४ । रूपादिमत्त्वाच्च विपर्ययो दर्शनात् । १५ । उभयथा च दोषात् । १६ । अपरिग्रहच्चात्यन्तमनपेक्षा । १७ ।" एतैः सप्तभिः सूत्रैर्वैशेषिकाभ्युपगमस्य वेदान्तविरुद्धत्वं श्रुतिविरुद्धत्वं च सर्वथा प्रसाधितं वेदव्यासेन । अत्र सूत्रत्रयस्य भाष्यं पठामः—:

"**उभयथापि न कर्मातस्तदभावः** ॥ इदानीं परमाणुकारणवादं निराकरोति ———— तस्मादप्यनुपपन्नोऽयं परमाणुकारणवादः ॥ **नित्यत्वमेव च भावात्** ॥ अपि चाणवः ———— तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ **अपरिग्रहाच्चात्यन्तमनपेक्षा** । प्रधानकारणवादो वेदविद्भिरपि कैश्चित् ———— अत्यन्तमेवानपेक्षाऽस्मिन् परमाणुकारणवादे कार्या श्रेयोऽर्थिभिरिति वाक्यशेषः ( १ )" ॥



---

( १ ) उभयथापि न कर्मातस्तदभावः ॥ नित्यत्वमेव च भावात् ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ वेदा०. अ० २, पा० २, सू० १२, १४, १७ ॥ इति सूत्रत्रयस्य भाष्यम्, नि० सा० मुद्रिते वेदान्ते ४३४–४४९ पृष्ठेषु द्रष्टुं शक्यते ।

* ओ३म् *

श्रावितनिबन्धे काव्यतीर्थमहोदये ब्र० विश्वनाथो निबन्धमालोचयितुमित्थम्प्रावर्तत। सोऽकथयद्, यद्, यदुक्तं निबन्धकर्त्रा "न वयं षट्पदार्थवादिनः" इत्यादि सांख्यसूत्रात्प्रतीयते दर्शनानां मिथो विरोधः, तन्नोचितम्, एतदुत्तरसूत्रसङ्गत्या अस्य सूत्रस्य पूर्वपक्षसूचितत्वविनिश्चयात्। यदप्युक्तं, 'सांख्यानाम्पदार्थद्वयमेवेष्टं,' तदपि न, तस्य षोडशपदार्थवादित्वात्। न च पदार्थोद्देश 'इयन्त एव पदार्थाः, नाधिका' इति विनिश्चयार्थः, अपि तु, इयन्त एव पदार्था अत्र शास्त्रे सम्यस्य विवेचनीयाः, मुक्त्युपयोगिनश्चेत्येतावत्येव तस्य प्रयोजनम्। न च ईश्वरवादाभावादेव सांख्यमीमांसयोर्नास्तिकता ईशानभ्युपगन्तृता चाभ्युपेया; तयोस्तदनावश्यकत्वाभ्युपगमाङ्गीकारादेव कार्य्यनिर्वाहात्।" समापितवचनश्चायं ब्र० जयचन्द्रेणानुगतोऽभवत्। स एवमाचष्ट स्वमतम्; "काव्यतीर्थमहोदयेन सुश्रवस्वरेण श्रावितो निबन्ध इति, धन्यवादमर्हति। प्रतिपाद्यवस्तुनि तु मम मतप्रभेदः। आदौ तावत् 'पदार्थोद्देशे भेद' इति यदुक्तं, तन्न सङ्गच्छते, अन्तर्भावेन एव भेदात्। यच्चापि सांख्यस्यानीश्वरवादित्वमुक्तं, तदप्यप्रामाणिकं, तस्यापिन्वाच्छ्रौतत्वाच्च नास्तिकताऽसम्भवात्। सांख्ययोगयोश्चैकतामाचक्षते तद्विदः, सा कथं सांख्यस्यानीश्वरवादित्वे घटेत ? अपरमप्यत्रोच्यते; दर्शनानाम् मिथो विरोध इति कथम्? एकस्यैकेन, अनेकस्यैकेन, एकस्यानेकेन, सर्वस्य सर्वेण वा ? नात्र पक्षचतुष्टये कश्चिदपि पक्षः सम्भवति। एकस्यैकेन चेत् ? कथं दर्शनानाम् मिथो विरोधो न पुनर्दर्शनीयः ?, द्वितीयतृतीयपक्षयोरपि एष एव दोषः, सांख्ययोगयोरेकत्वप्रसिद्धिविरोधभवः। नापि सर्वेषां सर्वैः, एवं सति सर्वतन्त्रसिद्धान्ताभावप्रसङ्गः स्यात्। किञ्च, न दर्शनेषु कथमपि विरोध उपपद्यते। न हि सूत्रभाष्यकृतोः क्वापि विरोधो दृष्टः। अत्र पुनः षट्स्वपि दर्शनकृत्सु सूत्रभाष्यकृत्सम्बन्धेन सर्वेऽपि मिथः सम्बद्धा एव। काणादभाष्यकृद्गौतमः, गौतमसूत्रभाष्यकृद्वात्स्यायनः, स एव व्याससूत्रभाष्यकृत्, योगदर्शनभाष्यकृद्व्यासः, इत्येवं सर्वेऽपि दर्शनकृत एकसिद्धान्तपरा एव प्रतीयन्ते। अत

एव चोक्तं स्वामिभिः, यदेते षडपि बहुषु जगत्कारणेष्वेकमेकमुपादाय तद् व्याख्यातुम् प्रवृत्ताः" ।

तदनु पं० अखिलानन्दशर्माऽपिधर्मे दर्शनानामविरोध इति पक्षमवलम्ब्य किमप्यवोचत् । तदनु पं० शालिग्रामशास्त्री स्वां वक्तृतामारभत । स आदौ पद्यमेतदुच्चारयामासः—

गरीयान्विषयोऽस्त्यद्य, लघीयान् सङ्गमो मम, वर्षीयांस्तत्र विश्वासो ह्रणीयान्त्समयो मम ।

तदनु सोऽकथयद्, यावद् यथा सर्वेन्द्रियाणां विषयभेदेऽपि न विरोधः, तथैव दर्शनानाम् । ते हि सर्वेऽपि समुचिताः क्रमशः पुरुषमुपर्य्युपरि भूमिकामारोपयन्ति । यत्तु काव्यतीर्थैनैतदगादि, यत्, 'न दर्शनकृतामाग्रहः तद्वचनन्तथ्यमेवेति'; तत्र वक्त्रैतदवादि, यत्, कथमाहार्य्यप्रामाण्यास्कन्दितज्ञानमृते प्रवृत्तिर्दर्शनेषु सम्भवतीति । 'ईश्वरासिद्धेरिति' च सूत्रं शास्त्रिमते पूर्वपाक्षिण एव, न तु सिद्धान्तिनः । यदपि काव्यतीर्थः सांख्यमते 'जीवशुद्धत्वेऽपि कथन्तस्य ज्ञानादिक्रिया' इत्याशङ्कत; तत्र वक्त्रा—

"तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः
इमास्ताः प्रतिविम्बन्ति सरसीव तटद्रुमाः "

इति पद्यानुसारम् प्रक्रियामाचक्षणेनोत्तरमदीयत । यद्यपि च काव्यतीर्थेन सांख्यार्यात्मविभुवादस्यानवस्थापकतोक्ता, तत्र तु कर्मभिरेव व्यवस्थिरितीतिशास्त्रिणः समुत्तरमासीत् ।

इत्येवम्, आत्मीयमनोगतम्प्रकाशितवति शास्त्रिणि, पण्डितपूर्णानन्दः पूर्वोक्ता एव दर्शनाविरोधप्रदर्शिनीरुपपत्तीर्व्याहृत्य विरराम । ततो ब्र० हरिश्चन्द्रेण 'न कथमपि पक्षपातासुराक्रान्तमानसेन निर्णयोऽर्थस्य कर्तुं शक्यते, ततोऽपहायैव पक्षपातं कार्य्यो विनिश्चय' इति प्रत्यपादि ।

वितीर्णवक्तृत्वे व्रतिनि, पं० व्रजभूषण इत्थमारेभे स्ववक्तृताम्; "नैकमूलाश्रितासु शाखासु यथा भेदो भवति, नैवमेवैकवेदमात्राश्रितेषु दर्शनेषु भेदो वक्तुं शक्यते । दर्शनाविरोधाय च श्रीमधुसूदनसरस्वतीभिर्विज्ञानभिक्षुणा च कृतः प्रयत्नः । अथ च दर्शनेषु विरोधस्तदैव वक्तुं शक्यते, यदि मन्त्रोक्तार्थे विरोधः स्यात्; ननु स दृश्यते । पर-

मात्मसत्त्वादौ कस्याप्यविरोधात् । भिन्नाङ्गानि पुनरादाय दर्शनानां व्याख्या प्रवर्त्तते, नैकमङ्गमादाय । यस्तु कोऽप्यस्ति भेदः, सोऽपि मार्गेषु, न लब्धव्ये वस्तुनि । न्याया-दौ च परमाणुवादे सत्यपि, परमाणूनामपि ब्रह्माधीनतैव । साङ्ख्येऽपि य ईश्वर-प्रतिषेध उच्यते, स न वास्तविकः; ईश्वरासिद्धेरित्यादिसूत्राणाम्प्रत्यक्षप्रसङ्ग-परिपतितत्वेनेश्वरनिषेधपरकत्वासम्भवात् । तस्मादीश्वरासिद्धेरित्येतस्य सूत्रस्य, ईश्वरे प्रत्यक्षलक्षणासिद्धेरित्येवार्थः श्रेयान् । "मुक्तात्मनः प्रशंसे" त्यादि सूत्रैश्चेश्वरावतार-वादी निषिद्धः, न पुनरीश्वराभावः प्रतिपादितः । 'मायान्तु प्रकृतिं विद्यात्' इत्यादि-कारिकाऽनुसारञ्च मायावादसांख्यवादयोरनन्यतैव । अणुवादप्रकृतिवादयोरपि न भेदः, अणुसंहतस्यैव प्रकृतित्वेनाभिमतत्वात् ।

नापि 'तस्माद्वा एतस्मादात्मनः' इत्यादिवाक्यम्ब्रह्मण उपादानकारणताप्रतिपादन-परमिति वाच्यम्, तच्छब्दैतच्छब्दयोरेकाधिकरणत्वादेतच्छब्दस्य च प्रत्यक्षगम्ये वस्तुनि प्रयोगात्, तच्छब्देनापि प्रत्यक्षप्रमाविषयभूतायाः स्थूलप्रकृतेरेव वचनात् । तथा चैव-माकाशशब्देनापि आकर्षणशक्तिरेव ग्राह्येत्येवम्प्रकारेणैव समन्वयो नव्यविज्ञानानुसारी विधेयः । "

एवं प्रतिपादितप्रतिपादितव्येषु पण्डितेषु, निबन्धलेखकः पं० काव्यतीर्थ इत्थं सर्वेषां कथनीयान्यालोचयत्; "अद्यतनं कार्य्यं सन्तोषदप्रभृदिति परमो ममानन्दहेतुः । नहि केनाप्यन्यविचारदासेन भवितव्यं, सर्वैरेवात्मनीनोऽर्थोऽङ्गीकार्य्य इत्येव प्राची-नर्षीणाम्, आर्य्याचार्य्यस्य दयानन्दस्यापि च मतम् । न च सर्वेषान्दर्शनानाम्मतानि मम मनोरमाणि प्रतीयन्ते । नाहमात्मविभुत्वौचितीं कथमपि कलयितुम्प्रभवामि । सांख्यदर्शनस्यापि भूयांसि मतान्यार्य्यमतेन विरुध्यन्ते । प्राचीनोऽयं लोकवादः "मुनीनाञ्च मतिभ्रमः" इति । किमन्येन ? पाणिनेरेव तावद् बह्व्यस्त्रुटयः सन्ति । एवञ्च सर्वेषामेव मानवानां सम्भवति भ्रमः; तत्र नास्ति कापि भयापेक्षा । बहवो वक्तारस्तावत्सांख्येश्वरवादं साधयितुमयतिषन्त, मया तत्रोट्टङ्क्यते, यदि मतोऽपीश्वरः सांख्येन, किन्तेनेश्वरस्य कृतम् ? किंवा तेन प्रयोजनं साधितम् ? " इति

तदुत्तरञ्च प्रधानाज्ञया सभा विसृष्टाभूत् ।

---

# त्रयोदशी ।

समवेतेषु पण्डितेषु, गृहीतासने च सभापतौ, श्री० इन्द्रो ब्रह्मचारी स्वकीयं निबन्धमश्रावयत् :—

## षड्दर्शनी धर्मशास्त्रपदयोग्या नवा ?

मान्यसंसत्पते पारिषद्याश्च,

पुरातनार्षग्रन्थेषु भृशमर्वाचीनैरपि दर्शनैः, न केवलन्देववाणीसाहित्यमेव, अपि तु पौरस्त्यानान्धीप्रकर्षोऽपि द्योत्यते । योवा कोवा तिष्ठतु तेषां रचनाकालो नास्माकमत्र काप्यस्त्यवधानापेक्षा । अद्य तु वयोऽनपेक्षं, धर्मप्रामाण्यतुलायान्निर्वेशितेषु दर्शनेषु कोन्वापतेदेषामर्घ इत्येव विवेचनीयमस्ति । ये तावद्ग्रन्थप्रामाण्यं समालोचयितुम्प्रवृत्ताः केवलं समयमेवोपजीवेयुः, अपि च समयमेवाश्रित्य तिष्ठेरन्, ते खलु—"गुणाः पूजास्थानं गुणिषु न च लिङ्गन्न च वयः" इतिन्यायानुसारमपथप्रवृत्ता एव । ये हि भूतन्धर्मे चाचारे च प्रमाणभावमापादयन्ति, कुतो न ते "तातस्य कूपोऽयमिति ब्रुवाणाः क्षारञ्जलङ्कापुरुषाः पिबेयुः" । नास्त्ववितथः क्रमविकाससिद्धान्तः, न चास्त्वनुसर्तव्यः पाश्चात्योत्कर्षवादः, नवीनमेव साध्वित्यपि भवेदुद्भ्रान्तवादः, तथापि "पुराणमित्येव न साधु सर्वन्नचापि सर्वं नवमित्यवद्य" मिति कविवाक्यमेव सर्वत्र राद्धान्तनीयमिति वार्ततरम् प्रतिभाति नः ।

तदित्थं, दर्शनानि नवीनानि वा सन्तु पुरातनानि वा, विवेचनीयमेतावदेव, किन्दर्शनानि धर्माचारिणाम्प्रामाण्यमर्हन्ति न वा ? न केवलम्प्रामाण्ये एव विवादः, अपि तु तेषान्धर्मशास्त्रत्वमस्ति न वेत्येषाऽप्याशङ्का समुद्यन्ती जनानाञ्चेतांसि बाधते ।

षण्णामपि दर्शनानान्निबन्धनकृतो मिथो भिन्ना एव । एतच्चाबाधितलोकवादोपपन्नमेव सत्यकोटीमारोहति । बहोः कालाद् यद्यपि षडपि दर्शनानि "उपाङ्ग" इत्यविशिष्टामभिख्यां लेभिरे, तथापि तानि नैकत्वेन कदापि व्यपदिश्यन्ते स्म । न वयङ्कस्मि-

न्नपि पुरातने ग्रन्थे षडङ्गाभेदवर्णनाचिन्हमपि पश्यामः । प्रत्युत, अवान्तरमतेषु तत्र तत्र मिथो विभिन्नतालक्षणान्येवोपलभामहे । तथाच, सांख्ये "न वयं षट्पदार्थवादिनो वैशेषिकादिवदि" तिसूत्रस्य सूत्रकारेण, "अनियतत्वेऽपि नायौक्तिकस्य सङ्ग्रहोऽन्यथा बालोन्मत्तादिसमत्वमि" तिसूत्रे समुच्चरणं व्यधायि; सहयोगिदर्शनमतपोषणोपेक्षयैव । पुराणेष्वपि बहुत्रोपलभ्यन्ते दर्शनानां विभेदिका उक्तयः । तत्तद्दर्शनार्वाचीनाचार्य्या अपि, वात्स्यायनव्यासादयः शङ्करोदयनादयश्च प्रत्येकं दर्शनानामनन्यानवलम्बितत्वमभिमन्यमाना एव तत्तद्दर्शनानि व्याख्यन् । अंशतो योगसांख्ययोः, न्यायकाणादयोः पूर्वोत्तरमीमांसयोश्चाभेद इति च बहुकालमेव विदुषामवास्थन् मतिः । तथा च वचनमुपलभ्यते :—

"सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।"

मीमांसयोस्तु गुरुशिष्यप्रवक्तृकत्वादेकाख्यानलभ्यत्वाच्च व्यक्तमेवाभेदः प्रवादागतः । न्यायवैशेषिकौ च कचिद्विभिद्यमानावपि नव्यतर्कनिबन्धकारैरेकीकृतौ पयसी इव विमिश्रितौ ।

परं, नातोऽर्द्धशताब्दीतः प्राक् केषामपि गणनीयसत्त्वानां दर्शनकोविदानामन्तश्चेतसि षड्दर्शन्येकतावादः सुदृढम्पदमाससाद । एतत्तत्त्वविस्तारजं यत्किमपि पुण्यन्तन्निःशेषमपि श्रीमति दयानन्दे स्वामिन्यवतिष्ठते ।

न चैतद्विप्रतिपत्तव्यं यदमुष्य प्रसङ्ख्यानवतो घटकलसयोरिवात्यन्ताभेद एव दर्शनानामभिप्रेतः, प्रमाणाभावात् । अस्तु नाम गौणप्रतितन्त्रासिद्धान्तव्यवस्था, मुख्यसिद्धान्तेष्वभेद एवेत्येतावदेवाचार्य्याणामाकूतम् । कथञ्चागौणेष्वभेद इति तु प्रतिपदमेव प्रतिपादयितास्मि संक्षेपतः ।

आर्य्यदेशिकेन प्रदर्शिते षड्दर्शन्यविरोधे, आप्तत्वेनोपात्तेषु तेषां सूत्रेषु तदनुयायिनां "किममूनि धर्मशास्त्राणी ?" त्येष विशयो नातिशेते युक्तियुक्तताम् । चिराय किल यतमाना अपि मिथ एव विवदमानाः, सिद्धिमनुपलभमाना अद्यापि तदवस्था एवार्य्या रेकाव्यतिकराक्रान्तचेतसः । न केवलमार्य्यसामाजिकानामेव स्वान्तेषु

जागर्तीयमुत्कटबुभुत्सा, अपि तु पौराणिकाद्या अपि नैवात्र निश्चलचेतसः सन्ति। परन्तथापि, किञ्चिद्विस्तीर्णाभ्यन्तरत्वादार्य्या एवात्र निष्पक्षपातविचारणां कर्तुमर्हन्ति।

यदाहमेतच्छीर्षकमाधाय निबन्धं विलिखितुङ्कृथितोऽभवं, तदा, शीर्षकमात्रादेव आर्य्यसामाजिकानामन्तस्सु, बाधमान एको विचारसंग्रामो मम स्मृतिपथमगात्। स खलु को नाम विचारसंग्राम इत्यत्रोत्तरवितरणाय, एतस्या आशङ्कायाः आर्य्यसमाजे किम्मूलमित्येवालोचयितुम्पर्य्याप्तम्। एतस्मिन्नेव च प्रसङ्गे, प्रकृतमप्युत्तरं स्फुटीभविष्यति। तदेतदुत्तरन्न सार्वत्रिकदृष्ट्या, अपि तु सामाजिकोपयोगितादृष्ट्यैव भविष्यति।

आर्य्यसमाजप्रवर्तकेन श्रीमता दयानन्देन तावदस्य वेदा एव मुख्यधर्मशास्त्रत्वेन निर्णीताः, इतरेषाम्ब्राह्मणादीनामपि चन्द्रवदन्याश्रयमेव प्रामाण्यन्निश्चितम्। नचैतत्किमपि नव्यम्मतमुत्थापितं श्रीमता, किन्तु प्राचीनजैमिन्यादिमुनीनां "शब्दस्य धर्ममूलत्वादशब्दमनपेक्षं स्यादित्यादि" सूत्राणामनुध्वनिरेव कृता।

एवञ्च—

"श्रुतिः, स्मृतिः, सदाचारः, स्वस्य च प्रियमात्मनः"
"एतच्चतुर्विधम्प्राहुः साक्षाद्धर्मस्य लक्षणम्"

इति मनुवाक्यमृज्वर्थतात्पर्य्यमेव, न तु पारमार्थिकार्थपरम्। धर्मे स्वतन्त्रं प्रामाण्यनिगमस्यैव। इतरेषान्तु तदनुपदानुसरणात्तदुपजीवनादेव च।

यद्यपीत्थं व्यक्तमेव देशिकेन धर्मपुस्तकैक्यं स्वीकृतन्तथापि "स्वभावो मूर्ध्नि वर्तते" इत्युक्तिं यथार्थयन्तः पौराणिकभावसहिताः, केचित्परे पुनस्तानेव भ्रमेण श्रेष्ठतयाऽऽभिमन्यमाना "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इतिताननुसरन्तः, अन्ये च "गड्डलिकाप्रवाहेणैव" तदनुपातिनः, एकेनैव धर्मपुस्तकेनातृप्तमानसा बहूनि धर्मपुस्तकान्यन्विष्यन्तो भ्रमन्ति, न तु तदौचितीम्पश्यन्ति। अयं हि पौराणिकानाम्प्रकारो यत्तन्मते यत्किमप्यार्षतयाऽनुश्रूयेत, तदेव "ब्रह्मवाक्य" मितिकृत्वा श्रुतित्वं वा लभते, धर्मपुस्तकैकांशत्वं वा। एवं तत्संस्कारानुप्राणितसंस्कारा एवार्य्यसामाजिकाः

"प्राचीनं वाक्यम्ब्रह्मवाक्यमिति" सिद्धान्तीकृत्य, तं वा वेदानुकूलतामुपनेतुं स्पृहयान्ति प्रयतन्ते च, वेदमन्त्रं वा कमपि तत्प्रतिपादितार्थवन्तङ्गवेषयन्ति; नचेदायस्यन्तोऽप्युपलभन्ते, कस्यापि मंत्रस्यार्थमेव व्यत्यस्य तदनुलोमतामानयन्ति। अयं हि गर्हणीयः आर्य्येषु केषाञ्चिद्विदुषां वेदार्थमभ्रंशनप्रकारः।

न चानेकैर्धर्मशास्त्रैः किमपि लभ्यम्, अपितु क्षतिरेव सम्भाव्यते;विषमेव बहुधर्मशास्त्रवादः कस्मैचिदपि धर्माय। बहुधर्मशास्त्राद् ग्लायन्त एवापरे समुदाचक्षतेः—

"श्रुतिर्विभिन्ना स्मृतयो विभिन्नाः, नैको मुनिर्यस्य वचः प्रमाणम्।
धर्मस्य तत्वन्निहितङ्गुहायाम्महाजनो येन गतः स पन्थाः ॥"

एवञ्च, निष्प्रत्यवस्थान एष बहुशास्त्रवादप्रत्याख्यानहेतुः। बहुधर्मशास्त्रवादस्य अन्येऽप्यनुपेक्षणीयाः सन्ति दोषाः,ते विस्तरभिया नात्राशेषतो निवेशयितुं शक्यन्ते। सङ्क्षेपतस्तु मुख्ये भक्त्यभावः, शाखाविसम्भेदः, सिद्धिविडम्बनाचेत्येतानि त्रीण्यघ्रानि प्रत्युद्भवन्ति अनेकधर्मशास्त्रोररीकारात्।

तत्राद्यस्तावन्मुख्ये भक्त्यभावः। मानसविकाराणाम्मित एव राशिर्जनमनस्सु वर्तते, नामितः। येषां ह्येकत्र सक्तम्मनः, तेषामेकत्रलग्नचेतोऽपेक्षयैकस्मिन्वस्तुनि प्रेम्णो गाढताऽल्पतरेत्यत्र न कोऽपि विसंवदेत्। एवं यैस्तावद्वेदेषु ब्राह्मणेषूपनिषत्सु दर्शनेष्वन्येषु तत्तन्मुनिकृतभाष्येषु धर्मशास्त्रधीसमानविषया भक्तिमतिर्धार्येत, तेषां वेदे भक्तिघनता कियतीङ्क्षामतां व्रजेदित्यत्र नास्ति विचारापेक्षा।

अपरश्च दोषः शाखाविसम्भेदः। जनानाम्बुद्धिवैलक्षण्यात्, परम्परागतप्रवादसाहाय्याच्चैषु ग्रन्थेषु परस्परप्रभेदाः पुरुषाणाम्मनस्युदययेयुरेव। वेदश्च पुनरेकत्वेनैव सिद्धः, न च प्रवादागतमप्यस्यानेकत्वम्। विरोधश्च गौतमेन "अभ्युपेत्य कालभेदे दोषवचना" दिति सूत्रेण परिहृतः।

स्वमतसिद्धिविडम्बना च तृतीयं दूषणम्। तथा हि, यदा केनाचित्परमतवादिना सार्द्धं स्वमतालम्बो विवादः प्रवर्तते, बहुषु ग्रन्थेषु धर्मप्रमाणत्वेनाभ्युपगतेषु प्रत्येकाविरोधप्रदर्शने महानायासो, महती च विडम्बना स्यात्। नचैषा सम्भावनैव,

परन्तु वृत्तमेवैतत् । अद्यत्वेऽपीयं विडम्बना नापरोक्षाऽनिन्द्रियगोचरा वा । एवं हि वयमाकुलीक्रियामहे, "कथं वो मत ईश्वराभ्युगमः, सांख्यजैमिनीयाभ्यां तदविरोधानात् । कथं वोऽपवर्गो विनाशी, व्यसनिनामेवानित्यो मोक्षः, शङ्करेण 'कश्चिद्वा व्यसनी मोक्षमेवानित्यमभ्युपगच्छेत्' इत्युक्तत्वात्; न केनापि दर्शनकारेणाभ्युपगतो मोक्षविनाशवादः ।" तत्रोत्तरणायास्माभिस्तत्तद्दर्शनसूत्रार्थ-सन्दर्शने वृथा नन्वायासोऽनुभूयते । एतदादिशङ्काविधुरितवृत्तिभिश्च स्वात्मनः स्व-परिस्थाप्यात्मनाञ्च विशुद्धिरपि कर्तुं सङ्कटाक्रान्ता खलु । नहि सङ्कटबहुलेऽत्र संसारे नरेणैकैकशः सकला विजेतुं शक्याः, सहस्राणि हि परेषान्नराय द्रुह्यन्ति तिष्ठन्ति । यद्ये-कैकस्तेषामेकैकसाधनबाधनीयः स्यात्,तदाऽपि सहस्रं साधनानामनुष्ठेयम्;अपारश्च कालो दुर्व्ययितव्यः । यदि तु पुनस्तेषां समराङ्गणेऽवतार एव न स्यात्,न तावान्त्समयोऽपि वृथा व्यत्येत, स्वोन्नतिश्च सुलभसिद्धिः सम्पद्येत । एवञ्चात्मोन्नतये केवलवेदाश्रयणमेव युक्तम् । अन्येषान्तु न्यायादिग्रन्थानां दर्शनकोटावेवान्तःकृताखिलदेशीयदर्शनश्रेणी-कायाम्प्रवेशः कर्तव्यः, न धर्मशास्त्रेषु ।

श्रीमतस्स्वामिनोऽपि तद्वाक्यानान्तत्र तत्रोपनिवेशनेन, न तद्धर्मशास्त्रत्वमभीष्टमा-सीत्,अपि तु स्वेन तेषामेकमतिताप्रदर्शनमेव; न हि स्पेन्सरोक्तिं स्वव्याख्याने भाषमाणः कोऽपि तेषां सूर्य्यवदवितथालोकत्वं तद्वद्यलीकत्वञ्चाभिमन्यते । अत एव स्वामिभि-र्मुक्तिप्रसङ्गे न्यायस्य "तदत्यन्तविमोक्षोऽपवर्ग"इति सूत्रम्पूर्वपक्षत्वेनोपन्यस्य तद्विषय-शङ्काविघटकम्प्रमाणन्नोपन्यस्तम् ।

एतावता प्रबन्धेन मम त्वेतावानेवाभिप्रायः, यदस्माकं धर्मशास्त्रं वेदमृते नान्यत्कि-मपि भवितुमर्हम् । नचार्षत्वमस्खलितत्वञ्च पर्य्यायवाचकौ शब्दौ, नाप्युपाङ्गत्वम्भि-र्व्यभिचारप्रमाणत्वञ्चेति समानार्थं पदद्वयं, तस्मादेषाम्प्रामाण्यं वेदोपजीवनांशे, सं-शये तु नैवैषाङ्कुत्थमप्यपेक्षा कर्तुं शक्यते; तथाचाह मीमांसाकृत्—:

"धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्"

अस्य भावार्थो यद्धर्मस्य वेदमूलत्वात्तद्व्यतिरिक्तमप्रमाणमेव धर्मे ।

"अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्"

अपि चान्येषामप्रामाण्ये, धर्मप्रामाण्ये स्वीकृते, तदप्रमाणभागानामपि कर्तृसामान्यादनुमानप्रमाणेन सत्यत्वप्रतीतिः स्यात्; वेदानुकूलभागवत् तद्विरुद्धभागानामपि प्रामाण्यमभ्युपगतं स्यात् ।

तथाच—

"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्"

यत्र तेषां वेदविरोधस्तत्रैषान्नापेक्षा कर्तव्या, यत्र त्वविरोधस्तत्र तेषां वेदसमुपजीवनात्सत्यताऽभ्युपेया ।

एतदेव चान्यत्र स्पष्टितममुना—

"चोदितन्तु प्रतीयेताविरोधात्प्रमाणेन"

यत्तु वेदे चोदितम् अन्यत्रापि च, तत्प्रामाण्य मेवाभिसम्पद्यते, नैगमप्रमाणपरिपोषितत्वात् ।

अत्र प्रत्यवस्थास्यते, "अयि भोः, कोयन्तवाकालीनो निरुपयोगश्च वाणीप्रसारः; न तावदद्यत्वे कोऽप्यार्य्यसामाजिको वेदभिन्नं किमपि स्वतन्त्रप्रामाण्यपात्रम्मन्यते" परम्, इयं प्रस्तुता शङ्का तु नैतमर्थन्द्योतयति, "किन्दर्शनान्यस्माकम्भवितुमर्हन्ति धर्मशास्त्राणि?" अहं वदे-यदि न सन्ति वेदाः । यदि सन्ति वेदाः, पुनरस्य प्रकरणस्यैव नार्थमुपलभे ।

एतावता प्रबन्धेन, मया, प्रतिपाद्यवस्तुनिरपेक्षमेव दर्शनानान्धर्मशास्त्रत्वस्वीकारविप्रतिषेधः कृतः, साम्प्रतं तद्विषयमपेक्ष्य किञ्चिद्वक्ष्यते ।

आदित्याभावे यदि कोऽपि दीप मादध्यात्, न कोऽपि खलु तङ्गर्हयेत्, अथ तु पूर्णप्रभामण्डलोद्योतिनि भगवति भास्करे तदादध्यात्, हन्त भोः! विचक्षणैर्वैलक्षणीयः एव स्यात् । सति वेदे किं हि नः तदङ्गैरुपाङ्गैर्वा ।

न चैतद्वक्तव्यं, वेदार्थपरिज्ञानाय तत्प्रामाण्याभ्युपगमोऽस्य इति; नहि कोऽपि शिष्यो गुरोरधीयानो गुरुवाक्यमेव प्रमाणत्वेनाभ्युपगच्छति। गुरोरधीत्य तत्साहाय्येन स्वमेव मतं संस्थापयति, एवं वेदप्रामाण्यप्रतिपत्तिभिः सर्वैरपि, अङ्गोपाङ्गानां वेदार्थव्यञ्जने सहायत्वमेव राद्धान्तनीयं; नतु निरुपाधिप्रामाण्यं वा, तेषान्धर्मपुस्तकत्वं वोद्धोषणीयम्।

वेदप्रामाण्याभ्युपगन्तृभ्यस्तावदार्य्येभ्यो धर्मशास्त्रत्वन्दर्शनानां युज्यते नवेत्यत्र कृतो विमर्शः, सम्प्रति तु सर्वपुरुषसाधारणी धर्मशास्त्रता स्यान्न वा ? इति विचार्य्यते।

ननु च भोः, को नाम धर्मो यत्प्रतिपादकता दर्शनेषु विचारणीया ? यदि,

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः'
'एतच्चतुर्विधम्प्राहु स्साक्षाद् धर्म्मस्य लक्षणम्।

इतिलक्षणक एव धर्मः, स तु न युज्यते, वेदप्रतिकूलस्मृतिसदाचारादीनां धर्मे प्रामाण्यस्य बाधितत्वात्। तेषाम्पृथगुपादानाद् वेदविरुद्धा अपि स्मृत्यादयः प्रामाण्यमीयुः। नापि—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः
धीर्विद्या सत्यम क्रोधो दशकं धर्मलक्षणम्,

निदर्शनमात्रपरत्वादस्य। अथ च भोः, अन्यत्रोक्तमन्वभिमतयज्ञादीनां क्व समावेशः।

"चोदना लक्षणो ऽर्थो धर्मः" इति चेत्, तदपि न, अर्थत्वे चोदनालक्षण एव विवादात्। चोदनालक्षणं, किमेतत्तर्केण प्रमाणान्तरेण वाऽनुगन्तव्यमित्यापि न वक्तुं शक्यं, वेदानामन्यालम्बनप्रामाण्ये स्वायत्तप्रमाणताविघातापत्तेः। किञ्च, साम्प्रतम्

'कवयो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः'
'अबोधोपहताश्चान्ये, जीर्णमङ्गे सुभाषितम्'

इत्युक्तिं जनाः

'श्रुतयो मत्सरिग्रस्ताः, स्मृतयो मलदूषिताः'
'अबोधोपहताश्चान्ये, जीर्णो धर्मो निराश्रयः'

इति कथ्यसहिताक्यरिपुष्णन्ति ।

नापि "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इत्येव कव्युक्तिराश्रयणीया, चित्तवृत्तीनां विचित्ररूपत्वात् ।

अयि मान्यसभ्याः, 'धर्मो दुरधिगमः,' इति विगतकाले भवन्त्यप्यत्युक्तिः, परमद्यत्वे तु सर्वथा सत्यतामवगाहते । वेदाः स्वतन्त्रप्रमाणं, किं तत्र प्रतिपादितमित्यवगन्तुं तावदतीव दुष्करम् ।

स्वाधीनो रसनाञ्चलः, परिचिताः शब्दाः कियन्तः क्वचित्,
क्षोणीन्द्रो न नियामकः, परिषदः शान्ताः, स्वतंत्रं जगत्,
ते युयङ्कवयो वयं वयमिति प्रस्तवनाहुंकृति–
स्वच्छन्दम् प्रतिसद्म गर्जत, वयम्मौनव्रतालम्बिनः

इयमेव दशाऽद्यतनवेदभाष्यनिबन्धनकृतां दरीदृश्यते । मम तु "सदाचारपरिप्राप्ता,उपयोगिनी चाचरणपद्धतिरेव धर्मः" इत्येव धर्मलक्षणं समीचीनतमम्प्रतिभाति । वैज्ञानिकसिद्धान्तेष्वाध्यात्मिकसिद्धान्तेषु च विश्वासप्रभेदाः धर्मप्रभेदन्नापादयन्ति, अपि तु मतप्रभेदमेव । एवं स्थिते च, दर्शनानान्धर्मविषयकमैकमत्यं सुव्यक्तञ्जायते । आभूत् तेषान्दार्शनिकविषयेष्वैकमत्यम्, धार्मिकविचारेषु तु तद्विरोधो नास्त्येव ।

दर्शनानि हि मननशास्त्राणि, न धर्मशास्त्राणि । मत्कृतधर्मलक्षणेन व्यक्तमेव विज्ञायते, यद्वैज्ञानिका आध्यात्मिका वा विश्वासा न धर्मः,अपि तु शुद्धाचरणपद्धतिरेव धर्म इति । न वयन्दर्शनेषु शुद्धाचरणपद्धतिविधानं सविशेषं लभामहे, येन धर्मशास्त्रत्वममीषामभिमन्येमहि ।

किञ्च, धर्मशास्त्रत्वाङ्किमभिमन्तव्यम्? किञ्चिदुद्देशेन धर्मप्रतिपादकत्वमिति चेत्? एवमनन्तानां ग्रन्थानान्धर्मशास्त्रता आपद्यते । धर्मविरुद्धाप्रतिपादकत्वे सति धर्मप्रतिपादकत्वमित्यपि न वक्तुं शक्यते, एवमपि धर्मशास्त्रसाहस्रीपातप्रसङ्गात् । मन्मते तु निरपेक्षप्रमाणत्वे सत्येव धर्मप्रतिपादकत्वं धर्मशास्त्रताम्प्रयोजयति । इतरथा काव्यिदेव

वेदात् तांस्तान्मन्त्रानाहृत्य तदर्थम्भाषायां विलिख्य स्वग्रन्थं धर्मशास्त्रत्वेन प्रख्यापयेत्। आप्तोक्तत्वे सत्येव नियम इति चेत्? एवमपि न नियमः कर्तुं शक्यते; नहि स्वतन्त्राणामेषामाप्तत्वं, सन्दिग्धञ्च तत्। अथ च, अनेकेषामनेकत्राप्तत्वबुद्धेः सद्भावात्, अनेकधर्मशास्त्रप्रसङ्गः स्यात्। "भिन्नरुचिर्हि लोकः," एकसमाजमाश्रिता अपि जनाः, विभिन्नमतित्वादनेकानाप्तानूररीकुर्वन्ति। तत्र तत्तज्जनस्य मतेन तत्तद्ग्रन्थस्य धर्मशास्त्रता प्रसज्येत।

एतावद्भिरुपपत्तिभिर्नैष ममाभिप्रायो वेदितव्यो यदहन्दर्शनानाम्महत्त्वमपलपामि। महत्त्वं हि सर्वेषां सापेक्षम्भवति; वदन्ति च,

"अधोधः पश्यतः कस्य महिमा नोपचीयते?
"उपर्य्युपरि पश्यन्तः सर्व एव दरिद्रति।"

स्वलक्षणप्रामाण्ये वेदे स्थिते सति न दर्शनानि प्राप्तुमर्हन्त्यनुपाधिमहत्ताम्। वेदस्य सर्वविद्याकोषस्य सतस्तावन्महिमाऽगोचरो वाचाम्। तदवलम्बितानि तदुद्भूतानि च षडपि दर्शनानि, यानि चाप्यन्यान्यार्षपुस्तकानि। कथं हि नाम गङ्गां विहाय, पयसे कुल्यासमाश्रयणीया; "को वा स्तनाग्राण्यवधूय धेनो दुग्धं विदग्धो ननु दोग्धि शृङ्गम्"। तदेवं वेदे सति न कस्यापि ग्रन्थस्य धर्मशास्त्रताऽभ्युपगमस्वप्नोऽपि युज्यते।

महिमा तु षड्दर्शिन्या न मया, नान्येन वा केनापि ग्रावरेखायमाना व्यपोहितुं शक्यते। महत्त्वोपेतानि हि दर्शनानि; न जगति काऽपि घटना, नापि प्रकृतेः कापि रचना, या न नियम्यते षड्दर्शिन्या। सम्पूर्णताम् प्रापितम् ब्रह्मविज्ञानं वेदान्तशास्त्रे; अनतिरिक्ततत्त्वः कृतश्चित्तनिरोधविधिर्योगकृता; अनुपेक्षितसाहाय्यो न्यायशास्त्रीयः प्रमाणवादः; अवस्थतास्वपि महतीषु, तत्वावस्कान्दिनीषु च बह्वीषु विप्रतिपत्तिषु अप्रतिषेधनीयस्पदार्थनिरूपणचातुर्य्यं वैशेषिककृतः; साङ्ख्यदर्शनमपि स्वप्रणालीमनुसरदोपेक्षणीयचरितम्; एवं सकलान्यपि दर्शनानि स्वस्वविषयेऽप्रातिभतामेव भजमानानि विद्योतन्ते। तत्प्रतिपादितार्थपोषकत्वाच्च भजन्ते धर्मशास्त्राङ्गताम्। सर्वाण्यपि च 'महीतामभिन्यायेन' कस्मिन्नेकार्थे समवेतानि। प्रकृतप्रतिपादितस्यार्थस्याङ्गभावमापन्न-

मेव तेषां विभेदकम् । एकस्यैवावयविनो ज्ञानस्य प्रतिपादनाय यथा चत्वारो वेदाः प्रवृत्ताः, तथैव नानेकस्य ज्ञानस्य तदनुकूलवृत्तिकर्मणश्च व्याख्यानाय, युक्तिपुरस्सर-विवेचनाय च षडपि दर्शनानि प्रवृत्तानि, वेदनिरपेक्षदृष्ट्या धर्मार्थप्रतिपादकत्वात् तद्ग्र-न्थताख्यापात्रतां लभन्त एव ।

एकार्थप्रतिपादकानि दर्शनानीत्यत्र भूयांसो, महान्तोऽपि च विप्रतिपद्यन्ते । भेदमेव ते दर्शनप्रतिपाद्यानाम्प्रतिपादयन्ति । क्षुद्रकथासु प्रसङ्गागतासु भेदास्तावन्न भेदा इति गणयितुं शक्यन्ते । मुख्यार्थेषु भेदानेव भेदइति ब्रुवते । तत्र मुख्यभेदशङ्कास्थला-नीमानि :—

(१) आद्यन्तावदीश्वरवादः । वेदान्तयोगन्यायवैशेषिकेषु मतं साङ्ख्यमीमांस-योश्च निषिद्धम्ब्रह्मेति हि नार्वाचीनस्ताद्विदां वादः।तथा च केचित्—:

"यत्र पश्यन्ति योगीन्द्राः साङ्ख्या अपि महेश्वरम्"

"अनादिनिधनन्देवन्तमेव शरणं व्रज"

साङ्ख्यसूत्राणाम्भाष्यम्प्रणयता विज्ञानभिक्षुणा च साङ्ख्येश्वरवादः साङ्-ख्येषु न्यूनताऽभ्युपगमवादश्चोक्तः ।

(२) अपरञ्च विवादास्पदञ्जगत्कारणवादः।साङ्ख्यीयानाम्प्रकृतिवादो, वैशेषि-काणाञ्च परमाणुकारणवादो मत इति तद्वादिनां स्थापना । ब्रह्मवादिनाञ्च ब्रह्मका-रणवादोऽभिमत इत्यपि केचिदभ्युपगच्छन्ति ।

तत्रादौ तावत्, ईश्वरवादविषयिणीं विप्रतिपत्तिं समालोचयामि । साङ्ख्यमते योऽयमीश्वरनिषेध आपाद्यते, सर्वथैव निर्मूल एषः । साङ्ख्यसूत्रेषु तावन्न क्वापि परमात्मवादनिषेधः समुपलभ्यते । यत्र कुत्रापि तन्निषेधो दृश्यते, तत्रापि विचार-दृष्ट्या कृते समालोचने निर्मूलैव सा कल्पनेत्युपलभ्यते ।

साङ्ख्येश्वरवादनिषेधतद्विप्रतिषेधविषयको यो विवादः, तत्र बहूनि रमणीय-रहस्यानि निरीक्षितुं शक्यन्ते । ये माध्यमिकदार्शनिकाः साङ्ख्यान्निरीश्वरवादिनमा-चक्षते, तेऽपि प्रवादानुगतमर्थं समर्थयितुमेव प्रवृत्ताः न भूतार्थोपलम्भे बद्धपरिकराः । येऽपि तान्प्रत्याचक्षते, तेऽपि नोद्यतन्ते निगूढमर्थमवबोद्धुम् । केवलं यथातथा तदर्थो-

पभासमात्रमेव प्रदर्शयन्ति । अद्यावधि भूयोभिरेवार्य्यसामाजिकपण्डितैः सर्वतन्त्र-स्वतंत्रायमाणैः कृते यत्नस्तदर्थसाधने । एकस्तावत् पण्डितवरिष्ठः सर्वतन्त्रस्वतंत्रतां यथार्थयन्निव, साङ्ख्यनिरीश्वरवादाभिमानिनो वाङ्मात्रेणैव, दृष्ट्येव कपिल-मुनिः, दिधिक्षन्निवेत्थं व्याहरति । “ नेश्वराभाववादः साङ्ख्यकाराभिमतः, साङ्-ख्ययोगयोरेकत्वाद् योगस्य च तदभ्युपगमात्, साङ्ख्यस्य वेदप्रामाण्याभ्युपगमद्वारा ‘दण्डापूपन्यायेन’ तदभ्युपगन्तृत्वात्, ईश्वरासिद्धेरिति सूत्रेण तत्प्रतिपादनात् ” इत्यादि । त एते हेतवो यथार्थमर्थमनुसरन्तोऽपि न बालिनः, स्युरेव चैते हेतवः, प्रबलतमान्य प्रमाणपरिपोषिताश्चेद्भवेयुः । तत्रोत्तरं हेतुयुगलं साध्यसमत्वाद्धेत्वाभासः । आद्यमपि स्यादेव साधयितृ, यदि साङ्ख्यस्य सूत्रेषु प्रतिपेध्यम्प्रतिषिध्येत । अप्रदर्शिते तु तस्मिन् तृणप्रतिकासारमेवाद्यम्प्रमाणम् । न केवलं रामनाम्नेव हेतुनाम्नैव शक्याः परे भाषयितुं, नापि केवलं सङ्ख्याचतुष्टयमेवार्हति एकहेतुं चतुर्गुणायितुम्, इष्यते तु तत्र हेतो हेत्वाभासताभावः । नान्यथा प्रयोजकत्वमुपयाति हेतुम् । नहि योगसाङ्ख्ययो रस्त्येकतेत्येव तयोः सर्वत्रैवैकमत्यं युज्यते । नहि देवदत्तयज्ञदत्तयोरेकं मन इति तदद्वैत-मेवापद्यते । भवति तु तत्र भूयोऽविशेषगुणवत्त्वमेव । अत एव च गीतायामेवान्यत्र-

“ एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु । ”

एतेन ‘साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ’ इति पद्यसमानाश्रयेण श्लोकार्थेनापि तयोः कास्मिँश्चिदर्थे भेदोऽपीत्येव विज्ञायते । यथात्वीश्वरवादे न विरोधः तथा सूत्रमात्रावलम्बेन प्रदर्शनीयम् ।

तत्रादौ, “ईश्वरासिद्धेः” इत्यारभ्य यथेश्वराविधानं, तत्समीक्षणीयम् । श्रीमत्पण्डिता-र्य्यमुनिभिरस्य सूत्रस्य “ईश्वरे पूर्वोक्तदोषाणामसिद्धेः” इत्येवम्प्रकारकोऽर्थो विहितः स्वकीये सांख्यार्य्यभाष्ये । तदेष महानितरैरप्रयत्नागम्यः सुपथप्रदर्शनपरश्चाध्वा । एवं कृते च “ईश्वरासिद्धे” रित्येकस्मादेव सूत्रादशेषेश्वरनिबद्धार्थप्रवचनङ्कर्तुं शक्यम् । यदि ईश्वरशब्दासिद्धिशब्दयोर्गर्भे “ प्रकृतिप्रत्ययोरिवोपसर्गः ” कोऽपि शब्दो नि-विशति, स सर्वोऽपि पूर्वोक्तन्यायेनोद्धृत्य पृथक् स्थापनीयः । दिङ्मात्रमेतदयत्न-सिसाधयिषया मयोक्तम्, प्रसङ्गपतितत्वेनापरिहरणीयत्वादुक्तञ्चैतच्छ्रीमता सर्वतन्त्रेण क्षन्तुमर्हम् ।

प्रसङ्गपरिपतिता समीक्षा चैषा, मतुच्छधीकल्पितं तत्सूत्रसम्बन्धम्भवच्छ्रवसामतिथीकर्तुं तीर्थायते। मन्मते "ईश्वरासिद्धेः"इत्यत आरभ्य "उभयथाप्यसत्करत्व" मितिसूत्रान्तम् पूर्वपक्षः; "मुक्तात्मनः प्रशंसे" त्याद्युत्तरेमकदेशिनः, तटस्थस्य वा। तदुत्तरार्थञ्च तदुत्तरसूत्राणि, तथा च "तत्सन्निधानादधिष्ठातृत्वम्मणिवत्"इतिसूत्रेण परमात्मनः सन्निधानमात्रेणैवाधिष्ठातृत्वं; यथा मणिर्दीपनशक्तिमान् अरक्तोऽपि दीपयत्येव, तथेश्वरोऽपि कृतिधृतिहृतिशक्तिमानरक्तोऽपि करोति, धारयति,हरति चाति प्रदर्श्य ,"विशेषकार्य्येष्वपि जीवाना"मितिसूत्रेण मनुष्यकर्मानुसारमेव तस्य कर्तृत्वादिकामिति प्रतिपाद्य,"सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेश"इतिसूत्रेण तस्याम्नायवक्तृत्वञ्जिगमयति ।

अन्यत्रापि पञ्चमाध्याये"नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धे" रित्येतेन पूर्वपक्षयित्वा,"स्वोपकारादधिष्ठानम्पूर्वव" दितिसूत्रेण स्वीयो य आत्मा तदुपकारार्थमेवाधिष्ठानमिति सिद्धान्तयित्वा, उत्तरसूत्रैस्तदेव दृढीकृतम्। अन्त्यसूत्रैश्च "अस्तु कश्चित्सिद्ध एव कर्माधिष्ठातेति" खण्डितम्। अन्यत्रापि " स हि सर्ववित्सर्वकर्ता""ईदृशेश्वरसिद्धिः सिद्धा"इतिसूत्राभ्याम्परमात्मैव सत्त्वेनाङ्गीकृतः।एवञ्च सुव्यक्ते साङ्ख्येश्वरवादे कपिलस्य नास्तिकतामभ्युपगच्छतां शेमुषीदीपः स्वीयमन्तस्तलराहित्यं गजभुक्तकपित्थसमानतां च व्यञ्जयति ।

मीमांसेश्वरवादविषये नाहं विशेषतो वक्तुं शन्कोमि। असमीक्षितमनालोचितञ्च तद्दर्शनम्मया।तदवबोद्धुरेव त्वेकस्य विदुषो मतिमाहरँस्तद्विषये कृतार्थो भविष्यामि। 'मित्रगोष्ठी'मासिकपुस्तकस्याद्यवर्षे श्रीविधुशेखरशास्त्री मीमांसेश्वरवादविषये किमपि लिखन् न सूत्रेष्वस्ति तद्बीजमि'ति स्पष्टमेव राद्धान्तयामास । एतावतैव तृप्तिमाधातुमीप्सन्नहं वः स्वाशक्तेर्हेतोः सन्तुष्टिमकुर्वन् क्षमार्ह एव ।

यद्यपि धर्मांशासंस्पर्शित्वात् सृष्टिकारणवादो भेदाध्यवसायपात्रं सन्नपि नास्मदभिमतां तदेकतां व्यपहन्तुमीष्टे; तथापि तस्याद्यकारणाविषयकत्वेन परमात्मप्रत्यासत्तेरनुपेक्षणीयतैव आपतति। न तावद् वैशेषिकसूत्रेषु क्वापि परमाणुवादस्स्वाभिख्यया‌ऽऽख्यातः,नापि प्रकृतिकारणताविप्रतिषेधः स्वशब्दैरेव विहितः। वेदान्तानाम्ब्रह्मवादस्तु विशा-

नभिक्षुप्रभृतिभिः पुरातनाचार्य्यैः,पं० आर्य्यमुनिप्रभृतिभिश्च सर्वतन्त्रस्वतन्त्रायमाणैरेव कदलीकाण्डखण्डं खण्डितः।

ये त्वन्ये दर्शनानाम्मिथः प्रभेदाः, ते मुख्यभागास्पर्शित्वात् मुख्यभेदाधायकत्वेन न यान्त्येव।उक्तञ्च कैश्चित्—:

" एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च '
' पूर्वस्मिन्वापरस्मिन्वा तत्त्वे तत्त्वानि सर्वशः '
' इति नानाप्रसङ्ख्यानन्तत्त्वानाम्मुनिभिः कृतम '
' सर्वं सिद्धं युक्तिमत्त्वा द्विदुषाङ्किमशोभनम '

अस्मिन्नेकतामदर्शने मम तेवतावदेव प्रयोजनं, यदस्ति किञ्चिद्दर्शनषट्केऽपि मिथः-प्रतिसन्धायकं, येनैतेषामैकान्ततोच्येत। जगतः किल बहूनि कारणानि। प्रकृति-मुख्या; सा साङ्ख्ये विशेषतो व्याख्याता। तदुत्तरन्ततः सर्वकार्य्यद्रव्यावयव-भूतानाम्परमाणूनामुत्पत्तिरिति तत्प्रक्रिया न्यायवैशेषिकयोः प्रधानतो विस्तारिता। जगतो निमित्तकारणमीश्वरः; स ब्रह्मसूत्रेष्वशेषतो व्याख्यातो निर्णीतश्च।

एवं वेदान्ते तावदुपनिषत्सारः श्रुतिपुरस्सरम्प्रतिपादितं, स एव न्याये तर्को-पपत्तिपुरस्सरम्। सर्वदर्शनानि च न्यायशास्त्रीयामेव तर्कनाप्रणालीमनुसरन्ति, तेनाभेदमेवात्मीयं व्यञ्जयन्ति। योगजैमिनीये तु न तत्त्वविनिश्चयविधानपरे,किन्तु विधेयविनिश्चयपर एव। तेऽनुसरन्नेव तत्त्वजिज्ञासुरन्तम्प्राप्तुं शक्नोति, नाननु-सरन्। तथा च योगिन आहुः —:

"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः"

एकतरदर्शने व्याख्यातञ्च विषयमत एव नान्यतरदर्शनकृद् विशेषेण व्याचष्टे। न्यायदर्शने विस्तरेण समीक्षितः प्रमाणभागो नेतरस्मिन्दर्शने विशेषत आलोचितः। पूर्वमीमांसया वेदितवेदितव्यश्च कर्मकाण्डो नान्यत्र दर्शने समीक्षादृष्टिपातविषय-तान्नीतः। योगे तत्त्वत उपदिष्टानि साधनानि नान्यदर्शनकृता सत्यपि प्रसङ्गे वर्णितानि। एतावता च दर्शनानि इतरेतरोपसंहारवन्तीति विज्ञायते।

एकत्वे सति चैषामस्त्राय: सम्पूर्णविज्ञानप्रकाशकत्वं सकलकर्मजातविनिश्चायकत्वञ्च विवादपदवीमतिक्रान्तमस्ति। सर्वगुणवत्त्वोत्कर्षादेव चैषामास्तिकार्य्यमतेमाननीयता। प्रायो वेदानुकूलार्थाभिधायित्वेन च धर्मशास्त्रत्वाभिमान एषु। न त्वेषां धर्मशास्त्रता युक्ता।

न चैतदपि विमतिपत्तव्यं, यन्निर्दूषणानि सर्वदर्शनानि। सम्भाव्यन्ते बहवो ह्रासा:, बह्व्यत्रुटयो, बहूनि च स्खलितान्येषु। सर्वङ्कुलयनाजगदेषां नात्र प्राकृतिकतत्त्वान्वेषणेऽपि वास्तविकदृगधिकत्वेनाभिमता व्यवहृता च। स्वीयम्पञ्चविधपरमाणुवादमवलम्ब्य प्रवृत्तौ न्यायवैशेषिककृतौ, सर्वन्तत्रैवान्तर्भावयितुमिच्छन्तौ कियन्नाम न वृथाऽचेष्टन्ताम्। सुवर्णादिसरलानां तेजस्यन्तर्भावो न कस्यान्तर्दूनयति विज्ञानविद:। जलाणूनामकार्य्यतास्वीकार: प्रत्यक्षविरुद्धत्वाद्वितथ एव दृश्यते। ज्ञानम् प्रशंसितुम् प्रवृत्त: साङ्ख्यकृद् वेदविहितान्यपि कर्माणि व्यक्तमेवान्त:फल्गूनि, निस्सारोदर्काणि चाचख्यौ। साङ्ख्यदर्शनीयश्चतुर्थाध्यायो न कथमपि दार्शनिकतत्त्वं बुभुत्सूनामन्तस्सन्तोषाय अवधृतपर्य्यन्त:। एवमेवान्येष्वपि दर्शनेष्वनुपेक्षणीया विकटदूषणसम्भृता: कतिचित् शब्दार्थप्रसङ्गादिविधुरता: सन्ति।

परम्, "कथासु व: प्रवृत्तानाङ्कण्टकानि पदे पदे" इतिवाक्यानुसारं दर्शनकलङ्कनाध्वा नास्माकन्निष्प्रत्यूह:। महान्तो हि व्याख्याकृतो न कथमपि क्षमन्ते परेषामर्थकल्पनाम्। मन्यामहे, सर्वाण्युपर्य्युक्तसूत्राणि शक्यन्ते वैदिकार्थपरतया नियोजयितुम्। नचास्माकङ्करेऽस्ति किमपि स्वकृतार्थपुष्टिकृत ईश्वराज्ञप्तिपत्रम्। न चास्ति मादृशे जने सर्वतन्त्रस्वतन्त्रभाष्यकृत्प्रसवस्थानतेज:। तथाऽप्यहम् प्रचलितार्थमेव सङ्गृह्य स्वार्थमापादयितुमयतिषि। शक्याश्चेदेतेषां सर्वेषामपि सूत्राणामर्था अन्यथयितुन्न मम तत्र ग्रह:, सन्तु ते। श्रुतमस्माभि: केनापि सुप्रसिद्धेन वाराणसीस्थेन परलोकमुपेयुषा कविवरेण रघुवंशं गोपालकथानकत्वेन विपर्य्यासितम्। न तत्रैतदपि चित्रन्नाम। नैतादृशी प्रणाली नवीना, अपि तु पुरातनी। ये जना: प्रत्यक्षप्रतीपार्थमपि स्वमतानुकूलार्थाभिधायित्वेन

कल्पयितुमिच्छेयुः, न परन्ते कदापि वास्तविकसत्यार्थोपलम्भे सार्थप्रयत्नाः, कृतकृत्याश्च भवन्ति । ये तु नात्मविश्वासभारेण परमनांसि दलयितुं कृतचेतसः, स्वाभिप्रेतञ्च परे समासञ्जयितुं कृतप्रतिज्ञाः, न ते कदापि स्वाकूतावरोधिमतीस्था आप्तवाक्यं विगणय्य, सर्वञ्जगत् स्वार्थकमेव परिकल्पयन्ति । अतेयमहमपि 'ईश्वरासिद्धेः' इत्यादिसूत्राणामीश्वरपरककथने मदुक्तदूषणान्तःपात्येव, यद्यहन्तत्र कुर्य्यामाग्रहम् । तन्मया स्वमतमात्रमुक्तं, सन्तु तेषां सूत्राणाम्प्रसिद्ध एवार्थः, न तथापि मत्स्थापनाविरोधः सम्भवति ।

महच्चात्र विवेचनीयमस्ति दर्शनानाम्प्रामाण्यविषये । धर्मविषये न दर्शनानाम्मिथो भेदः, नाप्यार्य्यजनाभिमतवैदिकमतविरोधः । आस्तां तावद्वेदस्य वार्ता, अत्र धर्मविषये तु दर्शनानाम्प्रायः परस्परम्परिपोषणजागरूकतैव । तदपि न सर्वांशे । तथाच–"दुखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इतिसूत्रे, "नियतकारणात्तदुच्छित्तिर्ध्वान्तवदिति" सूत्रे च, न्यायसाङ्ख्याभ्यां तत्त्वज्ञानान्मुक्तिरिति प्रतिपादितम् । नात्र कर्मव्यतिषङ्गेण मुक्तिरित्यर्थोऽभिहितः । वस्तुतस्तु,

" विद्याञ्चाविद्याञ्च यस्तद्वेदोभयँ सह "

"अविद्यया मृत्युन्तीर्त्वा विद्ययाऽमृत मश्नुते "

इतिश्रुत्यनुसारञ्ज्ञानकर्मणी उभे अपि मोक्षम्प्रयोजयतः, नैकम् । एवम्, "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यत्र दुःखात्यन्तनिवृत्तिः पुरुषार्थः, इति साङ्ख्यकृन्मतम् । एतत्संवाद्येव च "तदत्यन्तविमोक्षोऽपवर्गः" इति न्यायसूत्रमपि मोक्षस्यात्यन्तिकत्वमेव ख्यापयति । परन्नैतदार्य्याभ्युपगमसंलापि । न चात्यन्तशब्दोऽधिककालार्थकः कल्पनीयः, अनुचिताप्रसिद्धार्थकल्पनायाम् प्रमाणाभावात् ।

एवमेव च "न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च " "न कर्मणाऽप्यतद्धर्मत्वादि" त्यादिसूत्रैः साङ्ख्यकृता सृष्टेःकर्मनिमित्तताऽभिमता, सा च श्रुति-

स्मृत्याप्तोक्तादिसमस्तप्रमाणजातेन विरुध्यते; विद्याञ्चाविद्याञ्चेत्यादिश्रुतिषु विद्यादेरात्मन्येव मृत्युपारगमकत्वाद्यभिधानात्। "शरीरजैः कर्मदोषैरि" त्यादिस्मृतिषु चात्मनः कर्मनिमित्तकबन्धोपादानस्य मत्युपस्थापितत्वात् "दोषजन्मप्रवृत्तीत्यादौ" प्रवृत्त्यपाये च जन्मापायसङ्कीर्तनात्।

"नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम्" इतिसूत्रेण हि सांख्यकृता न वैदिककर्मभिर्मोक्ष इति समुद्घोषितम्। तदेतन्निन्दनीयतमं वैदिकपथावलम्बिभिः। "निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुते" रिति च सूत्रेण, असङ्ग आत्माभिहितो न चैतन्मतङ्कथमपि वैदिकमतानुयायिनामभिमतम्। परमात्मनः एवासङ्गत्वस्वीकारात्।

वैशेषिकदर्शनकृता च 'अनित्यश्चायङ्कारणतः' इति शब्दानित्यता स्वीकृता, सा चार्य्याभिमतशब्दनित्यत्वेन विरुध्यते। "वृक्षाभिसर्पणमित्यदृष्टकारित" मिति, 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्य्यग्गमनमणूनाम्मनसश्चाद्यङ्कर्मादृष्टकारितम्' इत्यादयः सिद्धान्ता न केनापि वैज्ञानिकेनाङ्गीकर्तुं शक्यन्ते। ब्रह्मसूत्रेष्वपि च "उभयथापि न कर्मातस्तदभावः" इतिसूत्रेण कर्मकारणता प्रतिपादिता, साऽपि सांख्याभ्युपगमवत्समुपेक्षणीयैव दयानन्ददर्शितदिगनुगामिभिः।

एवमनेकविरोधासम्बद्धानामसिद्धान्तोपेतानि, कचिद् वैदिकपथस्खलितानि च कथन्धर्मशास्त्रताम्प्रतिपद्येरन् षडपि दर्शनानि।

मान्य सभापते सभ्याश्च, 'ये वेदप्रमाणका न तेषाम्मते दर्शनानान्धर्मशास्त्रता भवितुमर्हतीति' मे प्रथमा स्थापना। 'धर्ममतयोर्भेदाद् वैज्ञानिकादिसिद्धान्तानाम्मतत्वाभ्युपगमाच्च, दर्शनानामनेकदोषस्पर्शित्वाच्च न धर्मशास्त्रतेति' च द्वितीया। नाहमाप्तप्रामाण्यवादी, नाप्यहन्दर्शनमतास्वीकारी, उभयासत्त्वेऽपि नापि सम्मते दर्शनानि सत्यान्येव, नाप्यसत्यान्येव, अपि तु पौरुषेयत्वादुभयपक्षव्याप्तानीत्येव मम सम्यक् प्रतिभाति। न मम मते दर्शनानि वेदानुकूलान्येव। सन्ति

भूयस्यस्तत्र वेदविरोधिन्य उक्तयः, याः सर्वथा अमाननीया एव । सन्ति च प्रत्यक्षविज्ञानविरुद्धानि बहूनि मतानि यानि न कथमपि मन्तव्यपदवीं लभेरन् । आत्मविभुत्वादीनि च बहून्यस्मन्मतासंवादीनि मतानि शास्त्रेषु बहुशः प्रतिपादितानि तत्कथन्नाम तेषान्धर्मशास्त्रताऽभ्युपगन्तुं शक्यते ?

अपि च सभ्याः ! उद्देश्यैक्येऽपि भिन्नशाखाप्रवृत्तीनि भिन्नार्थानि भिन्नप्रकाराणि भिन्नप्रवक्तृकाणि च दर्शनानि कथन्नाम सम्भूयैकशास्त्रतामीयुः, येन "धर्मशास्त्र" त्यविरुद्धाम्पदवीं लभेरन् । एवं यथा यथा दृश्यते, तथा तथा दर्शनानां धर्मशास्त्रत्वम्प्रतिषेधन्त्य एव युक्तयस्समुपलभ्यन्ते, न साधयन्त्यः । स्वविषये प्रौढता सम्पूर्णप्रायता च तेषामनिषिद्धैवेति शम् ।



*ओ३म्*

पठितनिबन्धे निबन्धकर्तरि पं० शिवशङ्करकाव्यतीर्थो निबन्धं समालोचयितुं प्राक्रमत्। सोऽत्रोचत "मन्मते वेदानामेव स्वतःप्रामाण्यम्, नान्येषां ग्रन्थानाम्। यत्रैव संस्कारादीनां विधानं, तदेव धर्मशास्त्रम्; तच्च वेदेषु, अतो वेदा एव धर्मशास्त्रवाच्याः। दर्शनादीनां च वेदाद् विरोधो दृश्यते। यथा, वेदानां मते अणुरात्मा, दर्शनानां मते तु विभुः। तत्रोभयो धर्मशास्त्रत्वे कस्य मतं स्वीकार्यम्? मन्मते तु वेदानाम्। दर्शनानि तु वेदानां संरक्षणार्थमेव, न तु स्वतःप्रमाणानि अत एव स्वामिदयानन्दोपि वेदानुकूलान्येव दर्शनानि प्रमाणानि, तद्विरुद्धानि, तु न प्रमाणानीति प्रतिपादयामास। ममापि च तदेव मतम्।" तदनु पं० आर्यमुनिरुत्थाय विस्तरेण निबन्धं समालोचयत्, यस्यायं संक्षेपः। "यदि संस्कारादिविधायकत्वमेव धर्मशास्त्रत्वमुच्यते, तदा ब्राह्मणान्यपि धर्मशास्त्राणि, ततश्च वेदव्यतिरिक्तमपि धर्मशास्त्रमभ्युपगन्तव्यमेव केचिद्। दर्शनेषु विरोधं पश्यन्तस्तेषां न धर्मशास्त्रत्वमङ्गीकर्तुमिच्छन्ति; अस्माकं मते तु दर्शनानां मुख्यविषयेषु विरोधो नास्त्येव। स्याद् दर्शनेषु विरोधो यद्युद्दङ्कितविरोधानां स्थलानां लापनं न कर्तुं शक्येत, अस्माभिस्तु कर्तुं शक्यते। किञ्च दर्शनेषु यमनियमादिविधानं दृश्यते, किं स न धर्मः? यच्च "आचरणपद्धतिर्धर्मः" इति लक्षणं निबन्धकर्त्रा स्वीकृतं; तत्तु तादृशमेव, यथा ज्वरस्य किमौषधमिति पृष्टे कश्चिद् ब्रूयात्, 'येन नाशः स्याज्ज्वरस्य'। का ह्याचरणपद्धतिः, या धर्मशब्देनोच्यते? किञ्च "आचरणपद्धतिर्धर्मः" इति ब्रुवता निबन्धकर्त्रा धर्मस्य नानार्थकत्वं न समीक्षितम्। वासनापरोऽपि धर्मशब्दो दृश्यते। "यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्" इति वेदवचनेन ज्ञानपरत्वमपि धर्मशब्दस्याभ्युपगन्तव्यम्। ज्ञानपरे च धर्मशब्देऽभ्युपगम्यमाने कथं न ज्ञानपराणां दर्शनानां धर्मशास्त्रत्वम् भवेत्? यदि ज्ञानकाण्डस्य महत्त्वं स्वीक्रियते,

तर्हि तत्त्वज्ञानबोधकस्य न्यायशास्त्रस्यावश्यमेव धर्मशास्त्रत्वमङ्गीकर्त्तव्यम्। मम मते तु गीताया उपनिषदां चापि धर्मशास्त्रत्वमस्ति। दर्शनानां धर्मशास्त्रत्वानङ्गीकारे वेदस्य रक्षैव न कर्तुं शक्यते। यद्यपि मुख्यं धर्मशास्त्रत्वं वेदानामेव, तथापि गौणं धर्मशास्त्रत्वं दर्शनानामपि स्वीकर्तव्यमेव।" तदनु पं० अखिलानन्दशर्म्मा तमेव विषयमधिकृत्य किञ्चिदवोचत्। स आह, "तद्वचनादाम्नायस्य प्रामाण्यमिति कणादभाषणाद् यदेव धर्मप्रतिपादकं तदेव प्रमाणमिति वयं मन्यामहे, तथा च धर्मप्रतिपादकत्वाद् दर्शनानि धर्मशास्त्राणि। परन्तु यदि वेदवचनात् स्पष्टं दर्शनानां विरोधः प्रतीयेत, तर्हि त्याज्यान्येव तानि वचनानि दर्शनानाम्। यदि वेदमतिरिच्य नान्यः कश्चिद् ग्रन्थो धर्मशास्त्रत्वेन स्वीकरिष्यते, तर्हि "सन्ध्याकर्तव्येति" वेदेनोपदिष्टेऽपि "सा कथं कर्तव्येति" विधेरनुपदिष्टत्वात् सन्ध्याकृत्यस्याशक्यतैवापत्स्यते। तस्माद् वेदवद् दर्शनानाञ्चापि धर्मशास्त्रत्वाङ्गीकारः समुचितः प्रतिभाति नः।" पं० व्रजभूषणः पं० अखिलानन्दशर्म्माणमनूदतिष्ठत्। सोऽकथयद् यत् निबन्धकर्तुराशयमनवबुध्यैव कैश्चिद् वक्तृभिः खण्डनमकारि। पण्डितवरोऽदर्शयद् यत्, नायं निबन्धकर्तुराशय आसीद् यद् दर्शनानां नास्त्येव धर्मशास्त्रत्वं, किन्तु तेषाममुख्यं धर्मशास्त्रत्वमित्येव तस्य पक्षः प्रतीयते। वेदानामर्थावबोधाय च केचिद् ग्रन्थाः सहायत्वेनावश्यमभ्युपगन्तव्या इति चान्ते सम्यगुपपादितमासीद् वक्त्रा। पं० व्रजभूषणे उपविष्टवति पं० मेलारामशास्त्री वक्तृतां व्यतरत्। सोऽकथयत्, "अद्य खल्वत्र निबन्धस्य गुणानपन्हूय दोषा एव सर्वैर्वक्तृभिर्दर्श्यन्ते इत्यस्माभिरभिनव एवायं समालोचनाप्रकारो दृष्टः। नहि दोषा एव दर्शनीयाः, अपि तु निबन्धस्य गुणा अपि प्रकटनीयाः। यदि सूक्ष्मेक्षिकयावलोक्येत, तर्हि वेदा एव धर्मशास्त्राणीत्येव समुचितः पक्षः प्रतिभाति नः, तदनुकूलत्वेन च दर्शनानां कथंचित् प्रामाण्यं स्वीकर्तुं शक्यते, न तु धर्मशास्त्रत्वम्, अन्यथा वङ्गभाषायामपि लिखिता ग्रन्था धर्मशास्त्रतां लभेरन्।" तदनु पं० पूर्णानन्दो लब्धायमानायामेकस्यां वक्तृतायां दर्शनानां धर्मशास्त्रत्वं प्रत्य-

पादयत्। सोऽकथयत्, ' अस्माभिर्वेदानां स्वतःप्रामाण्ये स्वीकृतेऽपि नान्येषां प्रामाण्यं निषेद्धुं शक्यते। वेदानुकूलानां दर्शनानामस्त्येव धर्मशास्त्रत्वम्। यदि नैवं मन्येत, तर्हि वेदवाक्यानां दुरूहत्वात् तदर्थावगम एव कथं स्यात्; अत एव षडङ्गसहितस्यैव वेदस्याध्ययनं सर्वत्रादिष्टम्। यत्तु कैश्चिद् दर्शनेषु पारस्परिको विरोध उद्भावितः, स सर्वथा निष्प्रमाणकः; मया सर्व एव विरोधाः परिहर्तुं शक्यन्ते। अस्मदाचार्यो दयानन्दोऽपि दर्शनानामविरोधमेव मन्यते। पाश्चात्यविद्वानविरोधस्तूपेक्षणीय एव, तस्यैव प्रामाण्या नभ्युपगमात्। दर्शनेषु विभुवादप्रतिपादनं तु वक्तु र्भ्रान्तिमेव दर्शयति। अतो वेदार्थविवृतौ सहायत्वाद् वेदाविरुद्धत्वाच्च दर्शनान्यपि धर्मशास्त्राणीत्यवश्यमभ्युपगन्तव्यम्"। तदनु पं० धर्मदेवो वर्म्मा दर्शनानामविरोधं धर्मशास्त्रत्वमेव च प्रतिपादितवान्। पं० धर्मदेवे वक्तृतां वितीर्णवति ब्र० हरिश्चन्द्रो दर्शनानां धर्मशास्त्रत्वं निषेधन् वक्तृतामदात्। सोऽवादीत् "तद्वचनादाम्नायस्य प्रामाण्यमिति कणादवचनादिदमेव प्रतीयते, यदीश्वरोक्तत्वादेव वेदानां प्रामाण्यं वर्तते, अत एव ईश्वरानुक्तत्वाद् दर्शनानां न वेदवत् प्रामाण्यं भवितुमर्हति। यत्तु कैश्चिदुक्तं, यत्, स्वामिदयानन्दवचनात् तेषां धर्मशास्त्रत्वमङ्गीकर्तव्यं, तत्तु निर्मूलकमेव; नहि स्वामिना क्वचिदपि दर्शनानां धर्मशास्त्रत्वमुद्घोषितं, पर तेन स्वीये सत्यार्थप्रकाशे वेदानामेव धर्मशास्त्रत्वं स्वीकृतम्। किञ्च, पुरुषस्याल्पज्ञत्वात् अस्त्येव मनुष्यकृतेषु ग्रन्थेषु भ्रमसम्भावनेति वेदस्यैव प्रामाण्य धर्मशास्त्रत्वञ्च स्वीकर्तव्यं, न तु दर्शनानाम्। यत्तु कैश्चिद् यमनियमादीनां संध्याप्रकारस्य च ज्ञानाय दर्शनानां ब्राह्मणानाञ्च धर्मशास्त्रत्वं स्वीकर्तव्यमित्युक्तमासीत्, तत्तु नाहं युक्तियुक्तं मन्ये; यतो वेदेषु स्थले स्थले यमनियमादयो वर्णिता एव, संध्याकर्मणि च संध्यानमेव मुख्यं, तत्प्रकारास्तु गौणा एव।" तदनु पं० शालिग्रामशास्त्र्यपि विविधै र्हेतुभिस्तमेवार्थमपुष्णात्। पं० आर्यमुनिना च जीवविभुत्वखण्डनाय दर्शितस्य "जीवो विभुर्न भवितुमर्हति, गतिमत्त्वात्, घटादिवत्" इत्यनुमानस्य "जीवो विभुः, अगतित्वात्

आकाशवत्" इत्यनुमानेन सत्प्रतिपक्षतामसाधयत्। तदनन्तरं पण्डित-श्रीरामसुबोधानन्दाभ्यां स्वीये वक्तृते कुर्वद्भ्यां दर्शनानामविरोधप्रदर्शनायैव प्रयत्नो व्यधायि।

एवं निजनिजवक्तृता वितीर्णवत्सु वक्तृषु समयस्यावशिष्टत्वात् पुनरपि वक्तारः सम्भाषणाय सभापतिनाऽऽदिष्टाः समभूवन्। प्रथमं तत्र पं० शिवशङ्करकाव्यतीर्थो ऽदर्शयद्, यद् वेदा मुख्यं प्रमाणमर्हन्तीत्यत्र न कश्चिद् विप्रतिपद्यते, विप्रतिपद्यन्ते तु बहवो दर्शनानां प्रामाण्ये। तस्मा-दस्मत्सम्मतौ वेदानामेव मुख्यं प्रामाण्यं धर्मशास्त्रत्वं च, दर्शनानां तु वेदा-नुकूल्यादेव प्रामाण्यं, न तु कथंचिद्धर्मशास्त्रत्वम्। तदनु पं० व्रजभूषणः पुराणेतिहासादीनां सर्वेषामेव वेदमूलकत्वाद् दर्शनानामपि वेदमूलकत्वम्, अतो न तत्र प्रामाण्यविप्रतिपत्तिरिति प्रत्यपादयत्। अतः परं पण्डितार्य-मुनिप्रमुखाः पं० अखिलानन्द-ब्र०हरिश्चन्द्र पं० शालिग्रामशास्त्रि-प्रभृतयो वक्तारः प्राग्वितीर्णासु वक्तृतासूपन्यस्तानेव हेतूनपुष्णन्।

इत्थमुक्तवत्सु सकलेषु वक्तृषु निबन्धकर्ता ब्र० इन्द्रः सर्वेषां वचनानि समालोचयितुं सभापतेराज्ञया समुदतिष्ठत्। सोऽवोचत्, "सभापते सभ्या-श्च, मदीयं निबन्धं समालोचयद्भिः भवद्भिः नितान्तमहमनुगृहीतोऽस्मि; तथापि शोकभरैराकुलीक्रियेऽहं, यदाहं पश्यामि यत्, मदीयमाशयं सम्यग-नवबुध्यैव कैश्चिद् विद्वद्भिः स्ववाक्प्रसारो व्यधायि। कैश्चित्तु कृपालुभि-र्मदीयमाकूतं सर्वथैव विपरीतीकृत्य स्वप्नेऽप्यचिन्तितानां विविधानां दो-षाणां भाजनीकृतोऽहम्। न मया क्वचिदपि दर्शनानां परस्परं विरोधः प्रति-पादितः, प्रत्युत मया स्वयमेव मुख्येषु सिद्धान्तेषु विरोधपरिहाराय प्रायत्य-त। मुख्येषु सिद्धान्तेष्वेव दर्शनानामविरोधः, गौणभेदास्तु न तेषां भेदं जनयितुमर्हन्तीति मम दृढतमं मत मस्ति। कश्चित्तु विद्वद्वरो मां "समाजभ-क्षक" मेव प्रतिपादयतिस्म। मया तु ततः सविनयं निवेद्यते-महात्मन्, न मया सुप्तावपि "समाजभक्षणं" चिन्तितमभूत्, प्रत्युत सर्वथा सर्वैः प्रकारैः "स-

मात्ररक्षण'' मेव ममाभीष्टतममस्ति। परन्तु नाहं मन्ये यद्, दर्शनानां धर्मशास्त्रत्वस्वीकारेण समाजस्य रक्षणं भवितुमर्हति। दर्शनानि नश्यन्तु भ्रश्यन्तु वा, न तेन समाजस्य समुच्छेदो भवितुमर्हति। वेदा एव सामाजिकैः धर्मशास्त्रत्वेन अभ्युपगम्यन्ते; तेष्वेव नष्टेषु अभ्युदितेषु वा समाजस्य नाशाभ्युदयौ सम्भवतः। केचित्तु प्रामाण्ये गौणमुख्यभावं स्वीकृत्य दर्शनानां मुख्यप्रामाण्याभावेऽपि तेषां गौणं प्रामाण्यमभ्युपगम्यते। परन्तु मम मते तु न प्रमाणानि गौणमुख्यभावभाञ्जि भवितुमर्हन्ति, परं तेषु मया परतस्त्वस्वतस्त्वे एव स्वीक्रियेते। अत्रैव च शास्त्रकाराणामपि सम्मतिरस्ति। अतो वेदानां स्वतःप्रामाण्यं, दर्शनानां तु परतः। तत्र मम मते 'निरपेक्षप्रमाणत्वे सति धर्मप्रतिपादकत्व' मेव धर्मशास्त्रलक्षणम्, तस्माद् वेदानामेव धर्मशास्त्रत्वं, नेतरेषां दर्शनादीनाम्। अन्यथा धर्मशास्त्रबाहुल्ये सिद्धान्तसंकरः सम्भवतीति मया स्वनिबन्धे सम्यक् प्रतिपादितमस्ति। केचित्तु वेदार्थसहायामीत्येव तेषां धर्मशास्त्रतामिच्छन्ति, परं न मम समञ्जसं तत् प्रतिभाति; नहि वेदार्थसहायत्वं धर्मशास्त्रतां प्रयुङ्क्ते, किन्तु स्वतःप्रमाणत्वे सति धर्मप्रतिपादकत्वम्। अधीयते शिष्या गुरोः; परन्तु किं ते गुरुवचनं वेदवचनवत प्रमाणीकर्तव्यं, यद्धि न कदापि अन्यथयितुं शक्यते। इत्थं साहाय्यं विदधन्त्यपि दर्शनानि न स्वतःप्रामाण्यं भजन्ते। पुनरपि स्वनिवेदनान्ते भ्रान्तिनिवारणाय मया स्वमतं संक्षिप्य प्रदर्श्यते, आशासे च, तत् सानुग्रहं विद्वद्वरेण्यैः कर्णभूषणीकरिष्यते। मम मते, महर्षिदयानन्दमतेऽपि च वेदा एव स्वतःप्रमाणानि; इतराणि सर्वाणि शास्त्राणि, सर्वेऽपि च ग्रन्थाः, तदानुकूल्येनैव प्रमाणतां भजन्ते, तद्विप्रतीपं तु सकलमपि ग्रन्थजातं हेयमेव। तेषामेव च वेदानां 'निरस्तापरप्रमाणापेक्षं' धर्मशास्त्रत्वम्, नान्येषां ग्रन्थानाम्। मनुष्यबुद्धिरचित्वाद् दर्शनेषु भ्रमसम्भावना सर्वदा जागर्त्येव, तस्मात् तेषां न कदापि धर्मशास्त्रत्वमङ्गीकर्तुमुचितं सामाजिकैः, तदितरैश्चापि।''

इत्थमुत्तरं वितीर्य स्थितवति निबन्धकर्तरि सभापतिः स्वान्तेवासिमुखेन सर्वेभ्योऽपि वक्तृभ्यो धन्यवादमदात्। तदनु श्रीगुरुकुलमुख्याधिष्ठता

कैश्चित्प्रियवचनै रभ्यागतान् सभ्यान् अभिनन्दन् 'सम्मेलन' विसृष्टिमुद्घोषयत् । स आह, "प्रियमहाभागाः, दिवसत्रये यदपि 'सम्मेलन' कृत्यमभूत्, तत् समवलोक्य आह्लादभरेण समुल्लसतीव मे चेतः । एतेन येऽप्युपकाराः भविष्यन्ति, तेऽद्य न वर्णयितुं शक्यन्ते, तान् समय एव स्वयं प्रकाशयिष्यति । यदीत्थमेव वैय्यक्तिकाक्षेपान् वैमनस्यं च विहाय प्रतिवर्षं शास्त्रीयाः विचारा भवेयुः, तर्हि कृतार्थः स्यात् सर्वथा मम भवतां च विदुषामयमुद्योगः । आशासेऽहं, यदागामिनि वर्षे, अतोऽप्यधिकेन समुत्साहेन समागत्य भवद्भिरनुग्रहीष्यामहे वयं वनस्थाः । "

ततः सभा विसृष्टाऽभूत् ।



* ओ३म् *

# साहित्यपरिषत्

सरस्वती श्रुतिमहती महीयताम् ।

इह गुरुकुले विद्वद्भिश्छात्रैश्च सम्भूय साहित्यपरिषदभिधा परिषदेका स्थापिताऽस्ति । प्रतिपक्षमस्या अधिवेशनं जायते । तत्र च प्रतिवारमेको निबन्धः, आर्यभाषया गीर्वाणवाण्या च निबद्धः श्राव्यते । यमधिकृत्य च विवादोऽपि प्रवर्तते । अस्याः सभासत्त्वमीप्सुभिः प्रतिवर्षं रूप्यकद्वयं प्रदातव्यं भवति ।

**इन्द्रः**

मन्त्री साहित्यपरिषदः